SREE

# ANIRUDHA SAMHITA

one of

DIVYASAMHITA

in

PANCHARATRA



*Edited by:*

A. SREENIVASA IYENGAR

1956

# FOREWORD

**Sriyahpati**, the Lord Supreme for the welfare of the animate and inanimate mankind, gave knowledge of science, merged himself with them manifested in incarnations as **Para, Vyuha, Vibhava** and Antharyami, and favoured the mortals with the way ot attaining him. But though only a few succeeded in those difficult ways of practice many were not able to be benefitted.Hence the Lord had to manifest himself in his fifth form of **Archa**, the image after Himself. Thus this worship of the Supreme in the form of image paved the way for salvation and attainment of permanent bliss or happiness, **Moksha**. Thenceforward **Archa**, the image worship, commenced to run to this day.

How this worship of Archa is to be performed and devotion practised is available for us in **Pancharatra Agama**.

*PANCHARATRA AGAMA*

This **Pancharatra Shastra** is divided into four parts, **Jnana, Yoga, Kriya**, and **Charya**. This text though manifests the four **Purusharthas Dharma, Artha Kama** and **Moksha**, chiefly details the mode of worshiping the deity or the

Supreme Lord in the form of his own creation for the easy attainment of salvation or **Moksha.** The shastra describes various objects essential for mankind.

1. *Jnanapada*: This expounds the qualities of the Lord and the *Chetanas* and the cosmos created by the Supreme, the fourteen worlds, the seven seas, the Sun, Moon, and stars, planets, the administrators therein etc, the universe these planets created. This *Bhoga*, the enjoyment, being transcient, the knowledge of science is needed to attain the permanent salvation, the bliss or the happiness and through that the mankind is liable to be freed from the endless Karma.

2. *Yogapada*—The second part deals with the Physical form, and the way to salvation with the knowledge of *Vedashastras* practising the *Upasana*, *Pranayama*, *Pratyahara* etc etc.

3. *Kriyapada*: The attaining of salvation as stated above proving more difficult, the easier mode of *Archa*, the image worship, for getting salvation came in and building temples, installation of images, processions, renovations, the mode of worship etc, commenced. As a

part of these and according to circumstances, details are also given of *Geo* and *Astrophysics, Administration, Citizenship, etc.*

4. *Charyapada*—This deals with the creed or application *Prayoga* detailed in *Kriyapada*.

The Pancharatra Agama is variedly interpreted in various Samhitas. The mode of image worship is modified for the Kaliyuga to follow the *Agamasastra.* The temple constructions, installation of images, worship, the processions, etc are to be conducted as enunciated in the respective samhitas. The texts of Pancharatra sastra are known as *Samhitas.*

**आगमा अष्टादश स्मृताः, "तन्त्रेऽप्यष्टोत्तरशतें" अष्टोत्तरसहस्राणि, सार्धकोटिप्रमाणेन कथितं तस्यविष्णुना.**

As per above there are 18, 108, 1008 Samhitas consisting about *One and a half* crores of slokas.

But on research, names of 275 Samhitas are found. About twenty of these consisting of a lakh of slokas alone are printed which compares very poor with the one and a half crores mentioned above.

## *DATE*

Though the Pancharatra Shastra and *Archa*, the image adoration remained from unknown times, the installation and worship of images continued to be conducted according to different shastras in different times.

कृते श्रुत्युक्तमार्गस्स्यात् त्रेतायां स्मृतिसंभवः ॥
द्वापरे तु पुराणोक्तः कलावागमसम्मतः ।
श्रुतिस्मृतिविधानेन पूजाकार्या युगत्रये ॥

It is enjoined that *Archa*, the image worship, during this Kali age has to be performed as enunciated in *Agama shastra*.

द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ॥
आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः ।
नहि देवाः प्रसीदन्ति कलौ चान्यविधानतः ॥
तेषामागममार्गेण सिद्धिर्न श्रौतवर्त्मना ।

But the Agama shastra can have no room if there is no *Utsava Moorthi* or procession deity. Amongst the 108 pilgrimage places of *Bharata Khanda* (Hindusthan) there was no Utsava-moorthi in the four chief centres of Melkote, Thirupati, Kanchi and Sreerangam, though the main *Moolamoorthi* image, was in existence.

In substantiating this, Sree Krishna and Balarama seem to have installed the *Utsavamoorthi* in Melkote about 3139 B.C. At about the same time in Sreerangam and thereafter in Conjeevaram the Utsavamoorthis seem to have been installed. The worship at Thirupati is conducted according to Srouta rituals (Vaikhanasa Agama) the rituals adopted in the previous age.

## *ANIRUDDHA SAMHITA*

Just as Vedas and Puranas, these Pancharatra shastras are divided into Satva, Rajasa, Thamasa Samhitas. The Samhita relating to *Satva* contain also a sub-division named *Divyasamhita*. Of various Divyasamhitas *Aniruddhasamhita* is one. This Aniruddhasamhita incorporates the varieties of worships, administration of Sciences, Raja Dharma, Town planning etc. During the upheavals of the country, despite calamities, our ancestors preserved these precious shastras valuing them more than their lives, riches, and property for the welfare of the coming generations.

The worship according to the *Pancharatra-Agama* commenced from the beginning of the

Kali age and the worship in the chief holy centres of *Melkote*, *Sreerangam*, and *Conjeevaram* has been as stated in the Ratnatraya or the Three Gems, *Satwata*, Powshkara and *Jaya* Samhitas. This arrangement commenced with Melkote, and those of Sreerangam and Kanchi followed later.

These are indicated in the following slokas—

वेङ्कटाद्रिं विनान्येषु देवदेवस्य धामसु ।
रत्नेषु त्रिषु रत्नानि त्रीणि तन्त्राण्युपासते ॥
सात्वतं यदुशैलेन्द्रे श्रीरङ्गे पौष्करं तथा ।
हस्तिशैले जयाख्यं च साम्राज्यमधितिष्ठति ॥
पाद्मतन्त्रं हस्तिशैले श्रीरङ्गे पारमेश्वरम् ।
ईश्वरं यादवाद्रौ च कार्यकारी प्रचार्यते ॥
श्रीरङ्गाद्यादवाद्रेश्च हस्तिशैलो विशिष्यते ।

During the course of research the genealogy of the Samhita comes to light as follows:

| SRIRANGAM | MELKOTE | KANCHI |
|---|---|---|
| | Satvata | Jayakhya |
| Powshkarasambita | Easwara | Padma |
| Parameswara | Brahma | |
| | Vishnu | |

All Acharyas prior to 13th century down to *Shankaracharya* have quoted in their texts names of various samhitas. Inscriptions and coins of 1300 A D to 1500 B C also substantiate this fact.

The knowledge imbedded in these unprinted books will not fail to augur well to the prosperity of the nation.

It is highly gratifying to note that the Mysore Government have been helping to print the texts of these Agama shastras for the lasting glory of the nation.

Mysore, **A. Sreenivasa Iyengar.**
6—11—1956

श्रीः

# अनिरुद्धसंहिता



इयं खलु अनिरुद्धसंहिता नाम पाञ्चरात्रागमसम्बन्धिनी दिव्यागमनाम्ना प्रथिता भगवतश्चातुरात्म्योपासन प्रतिपादिकेति आगमज्ञानां विदितचरमेव ॥

अस्याश्च शोधनावसरे आदर्शी कृताः कोशास्त्रयः ।

१. अडैयार पुस्तक भाण्डागारास्थित कोशात् प्रतिरूपितः प्रधानभूतः समग्रः नागराक्षरमयः शुद्धः "क" संज्ञितः ।

२. मैसूरु राजधानीस्थित राजकीय पुस्तकभाण्डगारस्थितः—तालपत्रात्मकः समग्रः ग्रन्थाक्षरमयः "ख" संज्ञकः प्रायेणाशुद्धः ।

३. मद्रास् राजधानीस्थित राजकीय पुस्तक भाण्डागारस्थितः कागदपत्रात्मकः ग्रन्थाक्षरमयः "ग" संज्ञकः प्रायश्शुद्धः ।

इत्येवं कोशत्रितयं अवलोक्य परिष्कृता वर्तते ॥



इह खलु श्रियःपतिः परमकारुणिको भगवान् आश्रित वात्सल्यैकजलधिः सर्वेषां पुरुषाणां हेयोपादेय वस्तुविवेचनाय " हर्तुं तमस्सदसती च विवेक्तुमीशो मानं प्रदीपमिव कारुणिको ददाति " इत्युक्तप्रकारेण सकलजनाज्ञानान्यथाज्ञानविपरीतज्ञानदूरीकरणाय च अनादिनिधनाविच्छिन्नसम्प्रदायतया असम्भाव्यमानभ्रमविप्रलम्भादि दोषगन्ध वेदाख्यं प्रमाणं अखिलचेतनोज्जिजीवयिषया प्रथममवतार्य तदनन्तरं " इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुतात् वेदः मामयं प्रतरिष्यति " इति शास्त्रोक्तरीत्या अतिविततगभीर वेदार्थस्य अल्पश्रुतैः मन्दमतिभिः दुरगमत्वेन तद्विशदीकरणस्य इतिहासपुराणश्रवणसम्पाद्यतया स्वयमेव इतिहास पुराणानि सधर्मशास्त्राणि वसिष्ठ पराशर पाराशर्यशुकशौनकमन्वादिभिः प्रवर्तयामास ॥

एवमपि—

यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ।
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ॥

इत्युक्तरीत्या सत्वादिगुणविशिष्ट चतुर्मुखादिप्रणीतानां तत्तद्गुणविशिष्टदेवतापारम्यप्रतिपादकतया वेदार्थानिर्णयमलभमानान् पुरुषानवलोक्य तेषामुज्जीवनार्थं तत्वहित पुरुषार्थप्रमितिजनकं प्रधानं पाञ्चरात्रानुशाब्दितं शास्त्रं प्रणिनाय । कृत्स्नस्यास्य पाञ्चरात्रस्य प्रणेता नारायण एवेति

"पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयं" इत्यार्षवचनेनावगम्यते । अस्य च पाञ्चरात्रस्य सकलजन श्रेयस्करत्वं महाभारते मोक्षधर्मे ज्ञानकाण्डे अभिहितम्—

गृहस्थो ब्रह्मचारी चेत्यारभ्य—

इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
ऋग्यजुस्सामभिर्जुष्टं अथर्वांगिरसैस्तथा ॥
भविष्यति प्रमाणं वै एतदेवानुशासनम् ॥ इति

एवं हिततमत्वेनोदित पाञ्चरात्रोदितो वेदः भगवन्तं (वासुदेवमेव) नारायणमेव सकलजगदादिकारणं मुक्तप्राप्यं, तदाराधनरूपाऽनाभिसंहितफलकर्मज्ञानाङ्कमुपासनं प्रपत्तिं तत्प्राप्तिसाधनं प्राह ॥

आगम व्यपदेश्यः.

तादृश भगवदाराधन बोधकं आप्तवाक्यं पाञ्चरात्रागमशब्दव्यपदेश्यं—यथा ॥

आगमो ह्याप्तवचनं आप्तिं दोषक्षयं विदुः ।
क्षीणदोषोऽनृतं वाक्यं न ब्रूयात् हेत्वसम्भवात् ॥

तन्त्रशास्त्रेपि—

सिद्धं सिद्धैः प्रमाणैस्तु हितं चात्र परत्र च ।
आगमं शास्त्रमाप्तानां . . . . . . ॥ इति ॥

एवंच औपनिषदसिद्धान्तस्यैव उपबृंहणतया पाञ्चरात्राद्यागमानां प्रवृत्तिः सिद्धान्तिभिः अभ्युपगम्यते । अत एव

प्रमाणनय तत्वालोकालङ्कारे देवसूरिभिः "आप्तवचनादाविर्भूतमर्थविशेषसंवेदनमागमः" इति उपचारादाप्तवाक्यं च आगमः इत्युक्तं भवति । अस्य दिव्यागमनाम्ना प्रथितस्य पाञ्चरात्रस्य भगवतश्चातुरात्म्योपासन प्रतिपादकत्वमागमज्ञैः अभ्युपगतमेव । एतदनुरोधेन ऋषयोऽपि देशकाल वर्तमानाननुसृत्य व्यरीरचन् । तदुक्तं—

कृते श्रुत्युक्तमार्गः स्यात् त्रेतायां स्मृतिसम्भवः ।
द्वापरे तु पुराणोक्तः कलौ त्वागमसम्मतः ॥
श्रुतिस्मृतिविधानेन पूजा कार्या युगत्रये ।
आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः ॥ इति ॥

आगमविभागः.

कर्मकाण्डप्रणीताः विधयो यथा त्रैगुण्यविषयाः तद्वत्—आगमा अपि (सात्विक राजस तामस भेदेन) त्रैगुण्यविषयाः वर्तन्ते । तदुक्तं—आगमास्त्रिविधाः प्रोक्ताः सत्वराजसतामसाः । इति । परन्तु—

असारं अल्पसारञ्च सारं सारतरं त्यजेत् ।
भजेत्सारतमं शास्त्रे रत्नाकर इवामृतम् ॥

इत्युक्तरीत्या सारतमस्यैवोपादेयता । सारतमश्च सात्विकागमः । "सात्विका मोक्षफलदाः राजसाः स्वर्गदाः स्मृताः" इत्युक्तेः ॥

पाञ्चरात्र प्राशस्त्यम्

कृत्स्नस्य पाञ्चरात्रस्य भगवन्मुखविनिर्गतत्वेनैव प्राश-स्त्यमवगन्तव्यं यथा पाद्मेऽपि—

तद्वत्सर्वेषु शास्त्रेषु पाञ्चरात्रं प्रशस्यते ।
सर्वेषामपि शास्त्राणां सारभूतं हरेः प्रियम् ॥
रहस्यं पाञ्चरात्राख्यं ऋषयो ह्यभिलेभिरे ।

इति " किञ्च—अस्य पाञ्चरात्रस्य दिव्यागमसंज्ञापि विष्णु-रहस्यादौ ख्याप्यते "—

श्रौतं वैखानसं प्रोक्तं वासिष्ठं स्मार्तमुच्यते ।
पाञ्चरात्राभिधं शास्त्रं दिव्यागममितीरितम् ॥

ईश्वरसंहितायामपि—" अतो दिव्यात्परतरं नास्ति शास्त्रं मुनीश्वराः " इति ॥

आगमग्रन्थाविर्भावपरम्परापि काचन श्रूयते । पौष्करतः पारमेश्वरसंहिता, सात्वततः ईश्वरसंहिता, जयातः पाद्म-संहिता चेति । अस्यां अनिरुद्धसंहितायां पौष्करसंहितोक्त-प्रकारः सात्वतोक्त प्रकारश्चावलम्बितः इति ज्ञायते । यथा—

पौष्करोक्तप्रकारेण यन्त्रं विष्णुमथापि वा ।
वासुदेवाख्ययन्त्रं वा सात्वतोक्तमथापि वा ॥ २४·७६ ॥

आहत्य पाञ्चरात्रसंहितासु—प्रत्येकं ज्ञानयोग क्रिया-चर्यापादभेदेन चत्वारः पादाः—तत्र वेदान्तयोगः ; धर्म, पाक, शिल्प, ज्योतिष, विषयाः । तत्रापि, विष्णवाराधन,

आलयनिर्माण, उत्सवविशेष, प्रतिष्ठाकरण, मन्त्रपुरश्चरण, प्रायश्चित्त, शान्तिकर्म काम्यकर्म विधानैः, तदङ्गतया भूगोलखगोलविचाराः, रत्नपरीक्षाविधयः, राज्यभारक्रमः, नीतिशास्त्रविचाराः; भौतिक शास्त्रविचाराश्च तत्र तत्र विविच्यन्ते। अत इयं अनिरुद्धसंहिता सर्वेषामुपादेयेति विद्मः।

धन्यवादाः.

पाञ्चरात्रागम विभागेषु वेदान्तभागेषु च केषाञ्चित् प्रकाशकानां श्रद्धाळूनां, श्री यदुगिरि यतिराज आसूरि सम्पत्कुमार रामानुजमुनीनां ज्ञापकार्थं प्रकाशिता सती स्वाचार्यसन्निधौ भक्तिश्रद्धापुरस्सरतया इयं अनिरुद्धसंहिता समर्प्यते ॥

श्रीमन्महाराज संस्कृत कलाशाला अध्यापकानां विदुषां सो. रामस्वामैय्यंगार्याणां, तथा डाक्टर् बिरुदाङ्कित श्रीमान् हेच्. आर्. आर्. अय्यंगार्, एम्.ए. महनीयानां च ग्रन्थशोधन समये प्रकटित साहाय्यस्य मम हृद्गतां कृतज्ञतां प्रकटीकर्तुमुत्सहे ॥

अस्याश्च संहितायाः मुद्रणे महीशूर संस्थानाधिपति श्रीमन्महाराजनियमानुसारेण प्रवृत्तानां तत्तदधिकारिणां साहाय्येन प्रकाशपदवीं नीता इयं लोककल्याणायउपयुक्ता भूयादित्याशास्महे।

भवतां वशं वदः,

आसूरि श्रीनिवासय्यंगार्यः-

# अनिरुद्धसंहितायां अध्यायानां विषयाः



# पाठान्तरम् स्खलित शोधनञ्च.



| पृठम् | श्लो. सं. | मुद्रितग्रन्थे | पाठान्तरम् |
|---|---|---|---|
| २ | ७ | चन्दनै | चम्पकै |
| | १० | उद्यदादित्य | उदयादित्य |
| ३ | २४ | विराजितः | विभूषितः |
| ६ | ४३ | मुक्तिमार्गः प्रसिध्यति | मुक्तिमार्गं प्रयास्यति |
| ७ | ११ | शुभ्रमच्छिद्रं | शुद्धमच्छिद्रं |
| ८ | १९ | विदोदानं | विदेदानं |
| ,, | ,, | जंफलं | सम्मितम् युक्तः |
| ९ | ४ | लोलुपंमनः | लोलुपाननम् |
| ,, | ५ | निरतं | प्रयुतं |
| १० | १० | योगाग्नि | यागाग्नि |
| १२ | १७ | बीजपात्रे तथाबीजं तत्तन्मंत्रेण वापयेत् इति साधु | |
| | १७ १८ | तिलमुद्गयवामाषाः सर्षपश्शालिरेवच। निष्पावश्चप्रियङ्गुश्च एते बीजाष्टकाः स्मृताः इति साधु | |
| १३ | २० | चतुस्थानमर्चनं | त्रिस्थानमर्चनं |
| १३ | २३ | मन्त्रोदितं | तन्त्रोदितं |
| १५ | ३३ | तन्त्रदीक्षा | मन्त्रदीक्षा |
| ,, | ३४ | वैश्यक्षत्रिय शूद्राणां इति साधु | |

| पुटम् | श्लो.सं. | मुद्रितग्रन्थे | पाठान्तरम् |
|---|---|---|---|
| १६ | ५ | साधकः | पूर्ववत् |
| ,, | ६ | समालिखेत् | समन्वितम् |
| ,, | ११ | ऐकाङ्गुलमानतः | नीलनीरजपत्रवत् |
| १८ | २४ | पीठगात्रककोणे | पिङ्गलाकारकोणे |
| २३ | ८ | यन्त्रकोर्ध्वं | कर्णिकोर्ध्वं |
| ,, | १० | भवेत्पीठं | बहिःपीठं |
| ,, | ,, | व्रजेत् | सृजेत् |
| ,, | १२ | वृत्तिभ्यां | पङ्क्तिभ्यां |
| ,, | १२ | ऐकीकृत्य | एवंकृत्वा |
| २४ | १४ | तत्पदे | तत्पार्श्वे |
| २४ | १४ | त्रयंत्रयं | द्वयंद्वयं |
| | १९ | द्विचतुष्क | त्रिचतुष्क |
| २७ | ४४ | सितादि | रक्तादि |
| | ४७ | स्थानं तु | स्थापनं |
| २८ | ५६ | स्नपनेच फलोत्सवे | प्रतिष्ठाया विशेषतः |
| २९ | ५९ | कुम्भमण्डलबिंबाग्नौ इति श्लोकानन्तरं 'कुम्भमाराधनं वापि अग्निबीजं च पूजने' इति 'ग' कोशे दृश्यते । | |
| ३१ | १४ | त्र्यङ्गुलं | द्व्यङ्गुलं |
| ३२ | २५ | ऐकद्वारकृतंचैव | चक्रद्वादशकं |
| ३३ | २६ | पिप्पलोद्वरक | पिपीलिकोदरं |
| ३३ | २८ | रुचि | विधि |

| पुटम् | श्लो.सं. | मुद्रितग्रन्थे | पाठान्तरम् |
|---|---|---|---|
| ३३ | ३० | प्रधिसंघं | वीथिसंघं |
| ३५ | १ | वृत्तं मध्या | वृत्तमाध्यं भवेद्बुधः |
| ,, | ३ | कुंभवेर्दि | कुण्डवेर्दि |
| ३५ | ७ | गदायोनि | योन्याकार |
| | ८ | चतुर्दशं | त्रयोदशं |
| ३७ | २८ | खण्डचन्द्रकम् | कुण्डचन्द्रकम् |
| ३८ | ३४ | पद्मपत्रं | पद्मक्षेत्रं |
| ३९ | ३९ | च दक्षिणम् | विचक्षणम् |
| ,, | ४२ | चतुर्ज्ज्वालां | चतुर्द्वारां |
| ४२ | ४ | वा भवेत् | वापयेत् |
| ४३ | ६ | च्छास्त्रवित्तमः | सूत्रवित्तमः |
| ४४ | १७ | भूति | भूमि |
| ५० | १६ | बालरक्षण | कालरक्षण |
| ५१ | २६ | कन्यादानं इति श्लोकानन्तरं व्यवहारं नृपः पश्येत् ब्राह्मणैस्सहनिस्त्वराः इति 'ख' 'ग' कोशे दृश्यते | |
| ५२ | ३८ | उत्तानन्तं | उक्तस्नानं |
| ५३ | ४५ | क्रोशद्वयं | क्रोशमात्रं |
| ५३ | ४७ | दह्यते | लभ्यते |
| ,, | ४९ | नीराजनमलीकयेत् | निरतादिनलो॰।येत् ? |
| ५४ | ५७ | वर्त्मनः | वित्तमः |
| ५५ | ५ | वर्धनम् | मुत्तमम् |

| पुटम् | श्लो.सं. | मुद्रितग्रन्थे | पाठान्तरम् |
|---|---|---|---|
| ५६ | २७ | रथकारजनैश्चैव इति श्लोकानंतरं<br>राजराजगृहेनैव वेदव्यासं प्रकारयेत् ।<br>पुरोहितं गुरोश्चैव दैवज्ञं च तथैव च ॥<br>इति 'क' कोशे दृश्यते । | |
| ५८ | २९ | शङ्कुस्थापन | शङ्कुस्थापन |
| ६० | ३ | भर्गद्वार | गर्भद्वार |
| ,, | ४ | मात्रं मध्यं च मुष्टिकम्·मानमात्रन्तदुच्यते | |
| | | स्थापने | स्नपने |
| ६५ | २२ | पत्रं | पात्रं |
| ६९ | २१ | यजेत् | न्यसेत् |
| ७० | २७ | मोदये | आनये ? |
| ७१ | ३६ | गण्डस्थं | कण्ठस्थं |
| ,, | ,, | स्मृतं | मृत्तिकाः |
| ७२ | ४३ | घटंविप्र | कुंभदीपं |
| ७४ | ९४ | गुरु | कृत्वा |
| ७५ | २२ | संहृति न्यास | तत्वन्यास |
| ७६ | २७ | अनपूजां | वास्तुपूजां |
| ,, | ३१ | वासुदेवान् | द्वारदेवान् |
| ७७ | ३६ | वस्त्रैराच्छादयेदिति श्लोकानंतरं<br>गन्धलेपं ततः कृत्वा प्रासादस्य समन्ततः<br>इति 'ख' 'ग' कोशे दृश्यंते'। | |

| पुटम् | श्लो.सं. | मुद्रितग्रन्थे | पाठान्तरम् |
|---|---|---|---|
| ८२ | ३४ | तर्जन्यादिति श्लोकानन्तरं | |

षडंगन्यासंततः कृत्वा दिग्बन्धं चाटुकारयेत् ।
अग्निप्राकारकं कृत्वा चक्रं प्राच्यादिषु न्यसेत् ।
करशुद्धिं त्रिधा कृत्वा चोटिका दर्शनं भवेत् ।
इति 'क' कोशे दृश्यते ।

| | | | |
|---|---|---|---|
| ८५ | १७ | तदुपायकम् | मुक्त्युपायकम् |
| ८५ | १९ | सर्वज्ञान | सर्वयज्ञ |
| ८८ | ४७ | पाद्यमेव वा | पत्रमेव च |
| ९० | ६५ | मङ्गलं तथा | द्राविडं तथा |
| ९१ | ७४ | परिस्थितम् | पुरस्सरम् |
| ९२ | ८६ | तथा चोर्ध्वं च पुण्ड्रकम् | मृत्स्नया श्वेतपुण्ड्रकम् |
| ९३ | ९१ | पायसं इति श्लोकानन्तरं | |

भक्ष्यं भोज्यं तथा पेयं लेह्यं चोष्यं तथैव च
इति 'ग' कोशे दृश्यते ।

| | | | |
|---|---|---|---|
| ९३ | ९३ | तन्नदानं | पितृदानं |
| ९४ | ३ | दक्षिणे पार्श्वे | पश्चिमेभागे |
| ९५ | ९ | उत्तानं | उत्तानानि |
| ,, | ११ | अग्नेरुत्तर | अग्नेर्दक्षिणतः |
| ९९ | ४८ | संप्रविश्याथ | सन्निवेश्याथ |

| पुटम् | श्लो.सं. | मुद्रितग्रन्थे | पाठान्तरम् |
|---|---|---|---|
| १०० | ३ | त्रिविधं | द्विविधं |
| ,, | ३ | सहस्रं तदर्धकञ्च | सहस्रेकलशं चैव |
| १०२ | २१ | नवकादिषु | नवघटीषु ? |
| १०६ | ६१ | कर्पूरं | कचोरं |
| ,, | ६५ | चूतमारग्वधं | आमलकं |
| ११० | १०१ | नवांकं विश्वमेव च | पुन्नागबिल्वमेव च |
| १११ | १०५ | कर्चूरं | तक्कोलं |
| ११७ | ३४ | कलशं | सकलं |
| १२१ | ७०-८० | 'ख' 'ग' कोशे न दृश्यते | |
| २३१ | ३१ | मुख्यकल्पे तु | अनुकल्पे तु |
| ,, | ,, | अष्टकुण्डं | चतुष्कुण्डं |
| १४३ | १९ | देवान् | वेदान् |
| ,, | २२ | पिण्डमाचरेत् | तृप्तिकारणम् |
| १५० | १२ | विविधं | द्विविधं |
| १५१ | २८ | श्लोकानन्तरं मण्डपालंकृतिं चैव तत्तद्रव्येण साधकः । पूजया संपुटीकुर्यात् प्रथमं पादमानकम् । द्वितीयं जानुमानं स्यात् तृतीयं चोरुमानकम् । चतुर्थं कटिमानंस्यात् शिवमानेपि वा भवेत् । इति 'ख' 'ग' कोशे दृश्यते । | |
| १५२ | २३ | पङ्कजोत्सवं | शरत्कालोत्सवं |

| पुठम् | श्लो.सं. | मुद्रितग्रन्थे | पाठान्तरम् |
| --- | --- | --- | --- |
| १५२ | २८ | श्लोकानन्तरं | तद्दलैः मण्डलंकुर्याद्यात्राबिंबं तथैवच इति दृश्यते |
| ,, | ३४ | गजोत्सवे तु | गन्धोत्सवे तु |
| १६७ | १२१ | तात्विकं | सात्विकं |
| १६८ | १२४ | मण्डयेद् | मण्डले |
| १७५— | २८ | कृत्तिकापर्वयुग्मेन- | कृत्तिकासर्वविघ्नेतु |
| १९० | ७ | द्रव्यमन्त्र | मन्त्रतन्त्र |
| १९१ | १२ | ततःपूजां | नित्यपूजां |
| ११७ | १० | श्लोकानन्तरं | कुंभवस्त्र समायुक्तं सूत्र मन्त्र समन्वितं इति 'क' कोशे दृश्यते |

## स्खलित शोधनम्

| | | | |
| --- | --- | --- | --- |
| २ | १४ | मार्गे | मार्गं |
| ३ | १७ | पादविप्रैः | पादवप्रैः |
| ४ | २६ | विस्मयाविष्टाः | विस्मयाविष्टः |
| ५ | ३५ | महान्स्यावि | महन्स्यपि |
| ८ | १६ | विप्रं | विप्रं |
| ,, | १७ | दरयात्रा | दूरंयात्रा |

| पृष्टम् | श्लो.सं- | मुद्रितग्रन्थे | शु. पा. |
|---|---|---|---|
| ९ | १ | नियत | नियतं |
| ,, | ५ | शास्त्रब | शास्त्रंब |
| १० | १० | शंङ्क | शङ्ख |
| ११ | १८ | द्विजः | द्विजात् |
| १३ | १६ | ब्रह्माविष्णु | ब्रह्मविष्णु |
| १४ | ३० | समानसि | समनयि |
| १५ | ३ | लृम | क्लृप्त |
| १५ | ४ | ब्रहिवृत्त | बहिर्वृत्त |
| १६ | १० | परिकीर्तितं | प्रकीर्तितं |
| ,, | ११ | षीठादिकान् | पीठादिकान् |
| ३७ | २० | बुध्या | बुध्वा |
| २४ | १७ | नदकं | नंदकं |
| २७ | ४८ | पीठादिक्ष्वष्टके | पीठादिष्वष्टके |
| २८ | ५४ | पावकाश्चैव | पावकश्चैव |
| ९१ | ७६ | तुष्ट्वा | स्तुत्वा |
| ९९ | ४७ | मुंत्कमन्यो | भुक्तमन्यो |



Introduction printed



(मेलुकोटा) यादवाद्रि सम्पत्कुमारभगवान्.

**नारायणाचलोत्तुङ्गशृङ्गशृङ्गार मूर्तये ।**



॥ हरिः ओम् ॥

श्री पांञ्चरात्रे

# अनिरुद्धसंहिता

हिमाद्रिशिखरे क्षेत्रे सर्वसिद्धनिषेविते
सर्वविद्याधरैस्सर्व गन्धर्वैश्चैव सेविते । १

सर्वसिद्धमुनिश्रेष्ठैः सर्वदेवैस्समाकुले
नानामृगसमाकीर्णे नानापद्मसमाकुले । २

नानावृक्षसमाकीर्णे नानापुष्पसमाकुले
नानापक्षिसमाकीर्णे सुवर्णद्रुममण्डिते । ३

मृगनाभिसमायुक्ते काञ्चनस्थलशोभिते
क्रमुकैर्नालिकेरैश्च केतकैरुपशोभिते । ४

अप्सरोभिः समाकीर्णे मातङ्गैरुपशोभिते
मुनिमुख्यैस्समाकीर्णै राश्रमैरुपशोभिते । ५

वापीकूपतटाकाद्यैः पन्नगैरुपशोभिते

चन्दनैर्वकुलैश्चैव पद्मषण्डैस्समाकुले
कुमुदोत्पलकह्लारैः निधिरत्नैः समाकुले । ७

मातुलुङ्गसमायुक्ते पनसैरुपशोभिते
गोगजैश्च समाकीर्णे ब्राह्मणैश्च समावृते । ८

तस्मिन्मध्ये समासीनमाश्रमे परमात्मने
भृगुं वेदविदां श्रेष्ठमात्मध्यानपरायणम् । ९

वेदवेदाङ्गतत्त्वज्ञं सर्वशास्त्रार्थकोविदम्
उद्यदादित्यसंकाशं चन्द्रबिंबनिभाननम् । १०

पवित्रपाणिसंयुक्तं कृष्णाजिनधरं परम्
प्रशान्तमनसं सौम्यं वीरासनसमन्वितम् । ११

पार्श्वस्था मुनयः सर्वे प्रणिपत्य जगद्गुरुम्
ऊचुस्तं मुनयस्सर्वे एतद्वाक्यमतन्द्रिताः । १२

वेदास्सर्वे समासेन साङ्गोपाङ्गाः सविस्तराः
त्वत्तः कमलपत्राक्ष श्रुताः पूर्वं दयापर । १३

श्रेयो मार्गो न पश्यामः तद्वदस्व महामुने
एतच्छ्रुत्वा महाप्राज्ञः प्रोवाच स महामुनिः । १४

भृगुः—

पुरा तपःप्रभावेन श्वेतद्वीपमुपागमम्

गोपुरैश्च समायुक्तमनेकावरणैर्युतम्
बहुमण्डपसंयुक्तं बहुपादसमन्वितम् । १६

उद्यानादि समायुक्तं पादविप्रैः? प्रतिष्ठितम्
प्रस्तरैश्च समायुक्तमनेकतलसंयुतम् । १७

तोरणैः पञ्जरैर्युक्तं पताकाभिरलंकृतम्
गरुडैश्च समायुक्तं कोणसिंहसमन्वितम् । १८

प्रासादं संप्रविश्याहं हेमाद्रिसदृशाकृतिम्
तत्प्रणम्य महाप्राज्ञं अन्तरं संप्रविश्य च । १९

प्रदक्षिणं क्रमात्कृत्वा आदिमूर्तिं संप्रणम्य च
विमानोत्तरपार्श्वे तु अनिरुद्धं प्रणम्य च । २०

तस्यान्तिकं समासाद्य पूजयामि जगत्पतिम्
पूर्वोक्तक्रमयोगेन चतुःस्थानार्चनैर्युतम् । २१

आसनाद्युपचारैश्च अर्घ्यादिद्रव्यसंगतैः
निवेदनैरपूपाद्यैर्मधुपर्कपुरस्सरम् । २२

इत्येवं चिरकाले तु याते प्रत्यक्षमादिशत्
देवदेवो जगन्नाथोऽनिरुद्धः परमःपुमान् । २३

नीलमेघनिभश्शान्तश्चन्द्रबिम्बनिभाननः
हारकेयूरसंयुक्तो मकुटेन विराजितः । २४

श्रीवत्सकौस्तुभोरस्को वनमालाविराजितः
पीताम्बरधरःस्रग्वी शङ्खचक्रगदाधरः । २५

आविरासीज्जगन्नाथः कृपया परया विभुः
तं दृष्ट्वा विस्मयाविष्टाः स्तोत्रैः स्तुत्वा जगत्पतिम् । २६

नमस्ते पुण्डरीकाक्ष नमस्ते गरुडध्वज
नमस्ते भुवनाधार नमस्ते चतुरात्मक । २७

नमस्ते कमलाकान्त नमस्ते करुणाकर
नमस्ते सर्वलोकेश नमस्ते श्रीधराय च । २८

नमस्ते देवदेवेश नमस्ते लोकपावन
स्तोत्रेणानेन विप्रेन्द्र प्रसन्नोभूज्जनार्दनः । २९

श्री भगवान्—

वरं वृणीष्व भद्रं ते प्रसन्नोऽहं तवानघ

भृगुः—

विदितस्सर्वशास्त्रार्थो वेदवेदाङ्गकं परम् । ३०

त्वत्प्रसादेन देवेश श्रुतं पूर्वं मया विभो
मुक्तिमार्गं न पश्यामि इदानीं तद्वदस्व मे । ३१

श्री भगवान्—

पञ्चरात्रोक्तमार्गेण भुक्तिर्मुक्तिश्च जायते
पञ्चरात्रादृते विप्रा मुक्तिमार्गो न विद्यते । ३२

भृगुः—

पञ्चरात्रं च किं देव केन प्रोक्तं जगत्पते
श्रुतं केन हृषीकेश मुक्तिः केन प्रलभ्यते । ३३

पञ्चरात्रस्य शब्दस्य कश्चार्थो ब्रूहि तत्त्वतः

श्री भगवान्—

पञ्चरात्रं मया प्रोक्तं लोकानां हितकाम्यया ३४

ब्रह्मेन्द्ररुद्रदेवांश्च श्रावयामास भूतले
सांख्ययोगादिशास्त्राणि रात्रीयन्ते महान्त्यपि। ३५

तत्सन्निधौ समाख्यासौ तेन लोके प्रवर्तते
चन्द्रतारागणं यद्वच्छोभते नैव वासरे। ३६

तथेतराणि शोभन्ते पञ्च नैवास्य संनिधौ
पञ्चत्वमथवा यद्वद्दीप्यमाने दिवाकरे । ३७

ऋच्छन्ति रात्रयस्तद्वदितराणि तदन्तिके
तस्मात्पञ्चरात्राख्यं ब्रह्मा लोकपितामहः । ३८

प्रणवं पञ्चसंभूतं पञ्चरात्रमिति स्मृतम्
पञ्चत्वाज्जायते जन्तोः पञ्चरात्रमितिस्मृतम् । ३९

पञ्चरात्रप्रकारेण येऽर्चयिष्यन्ति मानवाः
[illegible]

पञ्चरात्रमिदं शास्त्रं भुक्तिमुक्तिप्रदायकम्
मच्छासनमिदं शास्त्र मिदं गृह्णीष्व सादरम् । ४१

मत्प्रसादाद्विशेषेण शास्त्रपारंगतो भव
इत्युक्त्वा देवदेवेशस्तत्रैवान्तरधीयत । ४२

अहं शास्त्रं समादाय गमिष्यामि ममाश्रमम्
एतच्छास्त्रमुपाश्रित्य मुक्तिमार्गः प्रसिध्यति। ४३

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
शास्त्रावतरणं नाम प्रथमोऽध्यायः

## अथ द्वितीयोऽध्यायः

भृगुः—

पञ्चरात्रं समादाय दीक्षा तेनैव मार्गतः
अनिरुद्धप्रशस्तेन पञ्चरात्रेण मीयते । १

ऋषयः—

पञ्चरात्रमिदं कीदृक् तद्वदस्व महामुने

भृगुः—

पंञ्चरात्रं महाज्ञानं नारायणसमीरितम् । २

पञ्चरात्रात्परं शास्त्रं न भूतं न भविष्यति
ब्राह्मणः सर्ववर्णेषु यतिश्चाश्रमिषूत्तमः । ३

यद्वद्गङ्गा च तीर्थेषु देवतेष्वपि चाच्युतः
अश्वत्थः सर्ववृक्षेषु नक्षत्रेषु च चन्द्रमाः । ४

आदित्यानां यथा विष्णू रुद्राणां शंकरो यथा
वेदानां सामवेदस्तु नराणां च नराधिपः । ५

शास्त्रेष्वपि च सर्वेषु पञ्चरात्रं तथा भवेत्
यथा हि सर्वदेवानां वरिष्ठो विष्णुरव्ययः । ६

तथा सर्वेषु शास्त्रेषु पञ्चरात्रं वरिष्ठकम्
श्रुतिमूलमिदं तन्त्रं प्रमाणं कल्पसूत्रवत् । ७

पञ्चरात्रं विशेषेण विष्णुना भाषितं यथा
अतः प्रमाणं लोकेऽस्मिन् धर्मशास्त्रेषु सर्वशः । ८

धर्मशास्त्रेषु सर्वेषु आगमेषु विशेषतः
पुराणेष्वपि सर्वेषु पञ्चरात्रं प्रमाणकं । ९

पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्
श्रोतारो मूर्तिभेदाश्च ऋषयश्च पितामहाः । १०

वैष्णवं शासनं शुभ्रमच्छिद्रं पापनाशनम्
हितार्थं सर्वभूतानामादिदेवेन चोदितम् । ११

चतुष्पादसमायुक्तं चतुर्वर्गफलप्रदम्
पञ्चमं वेदमाख्यातं पञ्चरात्रं तु पावनम् । १२
पुण्यानां हि महत्पुण्यं पावनानां हि पावनम्
पुराणानां पुराणं हि धर्माणामपि धर्मकम् । १३
भगवद्भक्तजैश्चैव भगवच्छास्त्रमुच्यते
पुराणपुरुषेणोक्तं पुराणं पञ्चरात्रकम् । १४
पुराणं वैष्णवं प्रोक्तं पञ्चरात्रं च पावनम्
नारायणमुखोद्भूतं ब्राह्मणेनैव सेवितम् । १५
ब्राह्मणं पञ्चरात्रं च वेदं विष्णुमुखोद्गतम्
पञ्चरात्रविदं विप्रं देववत्प्रतिभावयेत् । १६
प्रणमेद्दण्डवद्भूमौ दृष्टमात्रं तु वैष्णवम्
अनादृत्य तु संमोहाद्दूरयात्रा भवेद्यदि । १७
नरकाय भवन्त्येते नात्र कार्या विचारणा
पञ्चरात्रमिदं विप्र नारायणमुखोद्गतम् । १८
निन्देद्यदि तु संमोहान्नरकाय भवेत्ध्रुवम्
पञ्चरात्रविदो दानं कोटिगोदानजं फलम् । १९
कन्यादानशताच्छ्रेष्ठं स्वर्णनिष्कशतादपि

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
शास्त्रप्रशंसा नाम द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

भगवान्—

आचार्यलक्षणं वक्ष्ये समासान्मुनिपुङ्गव
ब्राह्मणं योनिजं शुद्धं नियतब्रह्मवादिनम् । १

पञ्चरात्रविदं दान्तं सदाचारसमन्वितम्
युवानं कोमलं शान्तं सर्वावयवशोभितम् २

वेदवेदाङ्गतत्त्वज्ञं श्रौतस्मार्तक्रियापरम
मच्चित्तं मद्गतप्राणं मदाराधनतत्परम ३

मन्नामकीर्तनपरं मत्कथालोलुपंमनः
गुणवन्तं शुचिं दक्षं सत्यवादिजितेन्द्रियम । ४

शास्त्रज्ञ कर्मकुशलं पञ्चरात्रार्थवेदिनम्
पवित्रपाणिनिरतं प्राणायामपरायणम् । ५

पञ्चकालक्रियायुक्तं पञ्चयज्ञसमन्वितम्
मुद्रामण्डलकुण्डज्ञं मण्डलार्चनतत्परम् । ६

व्रतोपवासनिरतं दयाशीलगुणान्वितम्
सर्वपापविनिर्मुक्तं सर्वदोषविवर्जितम् । ७

कर्षणादिक्रियादक्षं नित्यस्नानक्रियापरम्
पवित्रकर्मकुशलं प्रतिष्ठाकर्मलंपटम् । ८

उत्सवादिक्रियादक्षं सहस्रकलशे क्षमम्
द्वादश्याराधनपरं द्वादशाक्षरचिन्तकम् ।　　९

स्वतन्त्रकर्मकुशलं योगाग्निनिरतं शुचिम्
शङ्खचक्राङ्कितभुजं धृतपंचाङ्गभूषणम् ।　　१०

चिदचिदीश्वरतत्त्वज्ञं मन्त्रयन्त्रक्रियापरम्
शिल्पशास्त्रविचारज्ञं शिल्पनिर्माणकोविदम् ।　　११

स्मितपूर्वाभिभाषं च गुरुपूजापरान्वितम्
स्वदारनिरतं भोगसुखिनं पुत्रसंयुतम् ।　　१२

क्षयकुष्ठादिरहितमनाचारविवर्जितम
समयाचारसंयुक्तं जितक्रोधं जितेन्द्रियम् ।　　१३

सर्वभूतदयायुक्तं कल्याणावयवान्वितम्
कल्याणकर्मसंयुक्तं काममोहविवर्जितम् ।　　१४

सालग्रामार्चनपरं गीतनृत्तविशारदम
वाद्यवादनवर्गज्ञं तालवर्गविशारदम् ।　　१५

एभिर्गुणैस्समायुक्तमाचार्यं वरयेत्सुधीः
शिष्य स्सर्वगुणोपेत स्सत्यवादी दयापरः ।　　१६

विनयादिगुणैर्युक्तः धर्मश्रुतिपरायणः
ब्राह्मणः क्षत्रियश्चैव वैश्यशूद्रौ तथापरौ ।　　१७

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः
एतच्छास्त्रोक्तमार्गेण दीक्षयेत्प्रथमं द्विजः । १८

इति श्रीपाञ्चरात्रे अनिरुद्धसंहितायां आचार्यलक्षणं नाम
तृतीयोऽध्यायः

## अथ चतुर्थोऽध्यायः

श्रीभगवान् —

दीक्षाविधिमथो वक्ष्ये समासान्मुनिपुङ्गव
उत्तरायणकाले तु दीक्षाकर्म समाचरेत् । १

शुभवारे शुभदिने शिष्यस्याथगुणान्विते
यदा शिष्यमनः प्रीतं तदा कालमुदाहृतम् । २

शुक्लपक्षे विशेषेण द्वादश्यामपि दीक्षयेत्
दीयते ज्ञानमेवेह क्षीयते पापसंचयः । ३

दीयते क्षीयते चैव ततो दीक्षाऽभिधीयते
दीक्षा च द्विविधा प्रोक्ता शास्त्रं मंत्रमिति द्विधा । ४

प्रथमं शास्त्रदीक्षां च शृणु ब्रह्मन् महामुने
शास्त्रपारंगतं विप्रं पूर्वोक्तगुणसंयुतम् । ५

गुरुमभ्यर्चयेच्छिष्यः शास्त्रविन्निरतं मुनिम्
आचार्यवरणं पूर्वं द्रव्योपादानमेव च। ६
अङ्कुरार्पणकश्चैवमधिवासमनन्तरम्
नेत्रकौतुकबन्धश्च शास्त्रपीठाधिवासनम्। ७
कुम्भमण्डलवह्निस्थदेवपूजापुरस्सरम्
द्वारार्चनं पुरा कृत्वा प्रातस्नानमनन्तरम्। ८
ऊर्ध्वपुण्ड्रविधानं च ज्ञापयेत् तन्त्रपारगः
शङ्खचक्राङ्कितं कृत्वा द्वारादियजनं परम्। ९
त्रिस्थानाभ्यर्चनश्चैव नेत्रबन्धमनन्तरम्
शास्त्रपीठार्चनं कृत्वा शास्त्रं संज्ञापयेत्सुधीः। १०
नेत्रवस्त्रं विमुच्याथ आचार्यवरपूजनम्
एतत्कर्म मया प्रोक्तं तन्त्रेऽस्मिन् मुनिपुङ्गव। ११
दीक्षाङ्कुरार्पणं वक्ष्ये अवधारय सांप्रतम्
सप्तमे पञ्चमे वापि तृतीयेऽहनि वापयेत्। १२
कर्मारम्भदिनात्पूर्वं प्रवृत्ते तु निशामुखे
मृद्ग्रहं पूर्वतः कृत्वा मण्डपालंकृतिं चरेत्। १३
पालिका द्वादशवराः मृदा संपूर्य देशिकः
व्रीहीनास्तीर्य चैतासु तन्मध्ये पालिकां न्यसेत्। १४

तत्पूर्वे बीजपात्रं तु पश्चिमे कुम्भकं न्यसेत्
द्वारपूजां ततः कृत्वा पुण्याहमपि वाचयेत् । १५

कुम्भे संपूजयेत्पश्चात् सोममन्त्रेण मन्त्रवित्
पात्राण्यभ्यर्चयेत्पश्चात् ब्रह्माविष्णुशिवात्मकान् । १६

बीजपात्रे तथा सोमं होममन्त्रेण होमयेत्
तिलं मुद्गं यवं माषं सर्षपं शालिमेव च । १७

निष्पावं च प्रियङ्गुं वा बीजाष्टकमुदाहृतम्
बीजपात्रं ततः कुर्यात् तत्तन्मन्त्रेण साधकः । १८

बलिं कृत्वा तु परितो रक्षां कुर्यादतन्द्रितः
यावत्कर्मदिनान्तं च पूजनं सम्यगाचरेत् १९

चतुस्थानमर्चनं कुर्यात् द्वारपूजापुरस्सरम्
प्राशयेत्पश्चगव्यं च विष्णुपादोदकं तथा। २०

पुण्याहं वाचयित्वा तु कौतुकं बन्धयेत्सुधीः
यन्त्रमण्डलगं वापि नारायणकसंज्ञकम् । २१

वासुदेवाख्य यन्त्रं वा विष्णुयन्त्रमथापि वा
केवलं मण्डलं वापि तन्त्रकान्तारशोभितम् । २२

दिव्यमन्त्रोदितं वापि मण्डलं कारयेद्बुधः
नेत्रंबन्धं ततः कृत्वा प्राणायामत्रयं चरेत् । २३

तत्त्वन्यासं ततः कृत्वा मातृकान्यासमाचरेत्
मूलमन्त्रान्तरन्यासं मायासूत्रं च बन्धयेत् । २४

शास्त्रपीठं समभ्यर्च्य शयने सन्निवेशयेत्
स्थापयेद्वाससा पश्चात् बलिं दत्वा समन्ततः । २५

जागरेण नयेद्रात्रिं प्रातः स्तुत्वा जनार्दनम्
मायासूत्रं ततश्छित्त्वा शरावेषु विनिक्षिपेत् । २६

नेत्रबन्धं विसृज्याथ स्नापयेद्वा सशिष्यकम्
अलंकृत्य यथा न्यायं मण्डपे सन्निवेशयेत् । २७

स्वस्थाने तु समासीनो द्वारादियजनं चरेत्
कुम्भमभ्यर्चयेद्विद्वान् मण्डलं तदनन्तरम् । २८

होमकार्यं ततः कृत्वा शास्त्रपीठार्चनं चरेत्
प्राणायामादिकं कृत्वा मन्त्रन्यासपुरस्सरम् । २९

शिष्यमानीय पार्श्वे तु समासीनं तदन्तिके ।
शास्त्रपीठं समानीस बोधयामास देशिकः । ३०

संहितानामशेषानामाद्यन्तं वापि बोधयेत्
एतत्तन्त्रमथोवापि यथाकार्यानुरूपतः । ३१

आचार्यं पूजयेत् पश्चाद्वस्त्रहोमाङ्गुलीयकैः
गोभूहिरण्यरत्नाद्यैर्यथा वित्तानुरूपतः । ३२

शास्त्रदीक्षा मया प्रोक्ता तन्त्रदीक्षा तथैव च
ब्राह्मणस्य विशेषेण विधिरेषा प्रकीर्तिता । ३३

क्षत्रियस्यादिशूद्रान्तं शास्त्रदीक्षा न विद्यते
केवलं यन्त्र मन्त्रेण बोधयेद्देशिकोत्तमः । ३४

मुद्रामात्रमथोवापि मन्त्रयन्त्रमथापि वा ॥

इति श्रीपाञ्चरात्रे महोपनिषादि अनिरुद्धसंहितायां
शास्त्रदीक्षाविधिर्नाम चतुर्थोऽध्यायः

## अथ पञ्चमोऽध्यायः

भगवान्—

विष्णुयन्त्रमथो वक्ष्ये शृणुष्व मुनिपुङ्गव
पुण्यक्षेत्रे बिशेषेण देवतायतनेषु च । १

पर्वताग्रे नदीतीरे गोष्ठे शुद्धगृहेपि वा
मण्डपं कारयेद्धीमान् षोडशस्तम्भसंयुतम् । २

लक्षमण्डपमध्ये वा वेदिं कृत्वा प्रमाणतः
गोमयालेपनं कृत्वा तन्मध्ये यन्त्रमालिखेत् । ३

तालमानप्रमाणेन प्रणवं पूर्वमालिखेत्
षट्कोणं तद्बहिःकल्प्य ब्रहिर्वृत्तसमन्वितम् । ४

अर्धाङ्गुलप्रमाणेनं वृत्तमालिख्य पूर्ववत्
चतुरङ्गुलमानेन वृत्तमुल्लिख्य साधकः। ५

तस्मिन्नेव विशेषेण अष्टपत्रं समालिखेत्
तन्मानेन बहिःकुर्यादष्टकोणं समालिखेत्। ६

अन्तःकोणेषु षड्वर्णं बहिःकोणेष्टवर्णकम्
तद्बहिः केसरं प्रोक्तं तद्बहिष्षोडशच्छदम्। ७

द्वादशाश्रं बहिःकुर्यात् द्वादशाक्षरमालिखेत्
केसरं च तथा कुर्याद्द्वात्रिंशच्छदमालिखेत्। ८

पत्राच्छतगुणं विप्र केसरं संप्रकीर्तितम्
चक्रं तु तद्बहिः कुर्यान्नाभ्यरंनेमि संयुतम्। ९

एकाङ्गुलप्रमाणेन नाभिनेमिं समालिखेत्
चतुरङ्गुलमानेन अरक्षेत्रं परिकीर्तितम्। १०

चतुर्विंशत्यरं कुर्यात्तदेकाङ्गुलमानतः
बहिःपीठादिकान् कल्प्य केवलाश्र मथापि वा। ११

षोडशाब्जे स्वरान् लिख्य वर्णं वक्ष्ये समासतः
नृसिंहानुष्टुभश्चैव द्वात्रिंशत्पत्रकं लिखेत्। १२

रेखास्सर्वाः सिताः प्रोक्ताः पीतवर्णेनचान्तरम्
षट्कोणं रक्तवर्णेन वर्णकं सितकंभवेत्। १३

कोणान्तरालमसितं केसरं पाण्डुरक्तकम्
अष्टपत्रं सितं कुर्यात् कृष्णं चैवान्तरालकम् । १४

बहिःकोणाष्टकं पीतं मध्यमं श्यामलं भवेत्
तद्बहिः केसरं विद्यात् रक्तवर्णेन पूरितम् । १५

पाण्डुरक्तनिभेनैव षोडशाब्जं प्रपूरयेत्
अन्तरं नीलवर्णेन बहिःकोणं तु पीतकम् । १६

अन्तरं श्यामवर्णेन बहिःकेसरकं सितम्
असितं चान्तरं कुर्यात् तत्पत्रं रक्तसन्निभम् । १७

हेमाभं नाभिभूभागमरं वै कृष्णवर्णकम्
अन्तरालं तु पीतं स्यात् तन्नेमिस्त्वसितं भवेत् । १८

पीठान्तरन्तु रक्तं स्यात्पीठादित्युत्तरं शृणु
यन्त्रबाह्ये विशेषेण त्रिंशद्विंशतिरेव वा । १९

सप्तकं पञ्चकं वापि विस्तारं संप्रकीर्तितम्
पीठं वीथीं च द्वारञ्च क्रमाद्बुध्या विलेपयेत् । २०

सितरक्तादिपीतेन निक्षिपेद्व्यत्ययेन तु
परभागविभागेन यथाशोभानुरूपतः । २१

पीठादिरहितं वापि पञ्चरेखां बहिर्लिखेत्
पञ्चवर्णक्रमाद्विप्र रेखायाः त्रित्रिवर्णकम् । २२

प्रणवाद्धि विशेषेण विष्णुमभ्यर्चयेत्सुधीः
अक्षराणि च सर्वाणि स्वस्थाने तु समर्चयेत् । २३

पाशाङ्कुशेन संयुक्तं नेमिमभ्यर्चयेत्सुधीः
पीठगात्रककोणे तु धर्मादीन् परिपूजयेत् । २४

अनन्तं वीथिभागे तु द्वारे चण्डादिकान् न्यसेत्
इति सम्यक् समाख्यातं विष्णुयन्त्रं महामुने । २५

भृगुः—

नारायणाख्ययन्त्रस्य विधिं ब्रूहि जगत्प्रभो ॥

श्रीभगवान्—

प्रणवं पूर्ववत्कृत्वा लिख्यमष्टदलान्तरम्
पूर्वादि सर्वकोणेषु अष्टाक्षरकमालिखेत् । २६

तद्बहिः केसरं वृत्तं बहिर्वृत्तं तु पङ्कजम्
अष्टपत्रं लिखेत्सम्यक् बहिश्चक्रं प्रकल्पयेत् । २७

अष्टपत्रस्य मध्ये तु नृसिंहाष्टाक्षरं लिखेत्
नाभि नेमिसमायुक्तं पूर्ववच्चक्रमालिखेत् । २८

अष्टाक्षरं पूर्ववच्चक्रं बहिर्द्वादशकोणकम्
द्वादशाश्रं च तत्कोणे बहिःकेसरपङ्कजम् । २९

तत्पत्रं द्वादशं प्रोक्तं द्वादशाक्षरकं न्यसेत्
तद्बहिष्षोडशाश्रं स्याद्बहिश्चक्रं प्रकल्पयेत् । ३०

अरैष्षोडशभिर्युक्तं नेमिनाभिसमन्वितम्
पूर्ववत्पङ्कजं कुर्यात् चतुर्विंशद्दलैर्युतम् । ३१

चतुर्विंशदरैर्युक्तं बहिश्चक्रं समालिखेत्
द्वात्रिंशज्ज्वालया युक्तं चतुरश्रं बहिर्भवेत् । ३२

पीठादि पूर्ववत्कल्प्य मरक्षेत्रं समाचरेत्
सर्वान्तरालमसितं सर्वारेखान्विता भवेत् । ३३

कर्णिकापीतवर्णेन अन्तरालं सितप्रभम्
केसरं पीतवर्णेन पद्मं वै पाण्डरारुणम् । ३४

नाभिनेमिद्वयं पीतमरक्षेत्रं तु रक्तकम्
पद्मपत्रसमाकारं कृष्णवर्णेन शोभितम् । ३५

केसरं क्षेत्रमखिलं पाण्डुरक्तेन पूरितम्
पाण्डुरक्तेन तत्रत्रं बहिःकोणं तु पीतलम् । ३६

बहिश्च मातुलङ्गाभं पीत कुङ्कुमसन्निभम्
तद्बहिःपत्रसंघंतु पीतरक्तेन मिश्रितम् । ३७

पत्रान्तरालं श्यामं च बहिश्चक्रं तु पूर्ववत्
इन्दीवरदलाकारं नीलवर्णेन रञ्जितम् । ३८

अन्तरालं तु रक्तं स्याच्चक्रं पूर्ववदालिखेत्
ज्वालामालां विशेषेण रक्तवर्णेन भूषयेत् । ३९

बहिःपीठादिकाः सर्वाः पूर्वमण्डलवद्भवेत्
नारायणं यजेन्मध्ये स्वस्थाने मण्डलं न्यसेत् । ४०

अरैके तु विशेषेण मूर्तीनभ्यर्चयेत् बुधः
नारायणाख्यकं यन्त्रं दीक्षाकाले विनिक्षिपेत् । ४१

व्याधीनामुद्भवे विप्र प्रायश्चित्तादिके पुनः
परचक्रप्रवेशे च कुहूदोषसमुद्भवे । ४२

... ... ... ४३

ग्रहदोषे च संपन्ने रक्षाकार्ये विशेषतः
अनावृष्टिविधौ विप्र तथा स्नपनकर्मणि । ४४

श्रीभगवान्—

वासुदेवाख्यकं यन्त्रं प्रवक्ष्यामि महामुने
प्रणवं पूर्ववत् कृत्वा द्वादशाश्रं बहिःक्षिपेत् । ४५

केसराब्जं तथालिख्य कोणे मन्त्राक्षरं लिखेत्
पत्रे द्वादशमूर्तिं च बहिश्चक्रं समालिखेत् । ४६

नाभ्यरानेमिसंयुक्तं चतुर्वारं समालिखेत्
चतुर्विंशाश्रकं बाह्ये गायत्रीं च समालिखेत् । ४७

पूर्ववत्पङ्कजं कुर्याच्चतुर्विंशद्दलं लिखेत्
चक्रन्तु पूर्ववत्कुर्यात् चतुर्विंशारकैर्युतम् । ४८

द्वात्रिंशत्कोणकं बाह्ये नृसिंहानुष्टुभं लिखेत्
तद्बाह्ये पङ्कजं कुर्यात् द्वात्रिंशत्पत्रसंयुतम्। ४९

बहिश्चक्रं तथा कुर्याद्यात्रिंशदरकैर्युतम्
पाशाङ्कुशौ नेमिभागे बहिर्ज्वालां समालिखेत्।

चतुष्षष्टिक्रमेणैव तदर्धं वापि कल्पयेत्
चतुरश्रं तु तद्बाह्ये पीठादीन् पूर्ववल्लिखेत् ५१

पञ्चपत्रारकं पूर्वे मध्यमे मातुलुङ्गवत्
अपरे तु विशेषेण परश्चारश्चसंपरम् ?। ५२

रेखागणं तथा पूर्वमन्तरालं तथा भवेत्
कर्णिका पीतवर्णेन कोणं वै शुक्रवर्णकम्। ५३

नाभिनेमिद्वयं श्याममरक्षेत्रं सितं भवेत्
अरं वै पीतवर्णेन बहिः कोणं तु रक्तकम्। ५४

केसरक्षेत्रकं सर्वं रक्तपीतेन पूरितम्
पत्रंतु पाण्डुरक्तेन नेमि नाभि सितं भवेत्। ५५

अरंतु कृष्णवर्णं स्यादन्तरालं तु पीतकम्
बहिःकोणं तु पीतं स्यादन्तरालं तु कृष्णकम्। ५६

बहिःपत्रं तथारक्तं नाभि नेमि सितं भवेत्
अरंतु कर्बुरं विद्यात् ज्वालासंघंतु रक्तकम्। ५७

पीठादि पूर्ववत्प्रोक्तमक्षरंतु सितं भवेत्
इति सम्यक् समाख्यातं महायन्त्रं महामुने । ५८

यः पूजये महायन्त्रं स याति परमं पदम्
सोऽतुलां श्रियमाप्नोति कोटियज्ञफलं भवेत् । ५९

सर्वपापविनिर्मुक्तः सर्वदानफलं लभेत् ॥

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
यन्त्रविधानं नाम पञ्चमोऽध्यायः

## अथ षष्ठोऽध्यायः

श्रीभगवान्—

मण्डलानां विधिं वक्ष्ये समासादवधारय
चतुरश्रीकृतं क्षेत्रं त्रिंशधा विभजेच्च तत् । १

अंशकानां भवेदत्र नवानां शतकंभवेत्
तन्मध्ये दशपङ्क्त्यातु पद्मक्षेत्रं प्रजायते । २

क्षेत्रद्वादशभागैकं व्यवधानं प्रकल्पयेत्
व्यवधानं त्रिधा कृत्वा व्योमवृत्तं तथाभवेत् । ३

चतुर्धा विभजेत् शेषं प्रथमं कर्णिकापदम्
द्वितीयं केसरं प्रोक्तं तृतीयश्च चतुर्थकम् । ४

चतुर्थैकांशमानेन दलाग्रं संप्रकल्पयेत्
शिष्टेनांशगणेनैव पत्रमेकं प्रकल्पयेत् । ५

पत्रान्तरालकं सर्वं कनिष्ठाङ्गुलिमानकम्
पत्रमध्ये त्रिरेखाञ्च पञ्चरेखां तथैव च । ६

यवमात्रोन्नतं कुर्यात् पत्रमूलं तदानयेत्
पत्राग्रं पृथुतां याति अथवा केसरांशकम् । ७

कर्णिकाग्रांशमानं वा इच्छया परिकल्पयेत्
यन्त्रकोच्चं पत्रमानं केसरं पत्रकांशकम् । ८

एवंतु पङ्कजं कृत्वा व्योमवृत्तं बहिर्भ्रमेत्
व्योमवृत्ताद्बहिर्वृत्तं चतुरश्रं प्रकल्पयेत् । ९

शेषं पङ्क्तिपदेनैव पीठादि परिशोधयेत्
एवं पङ्क्त्या भवेत्पीठं चतुर्दिक्षु द्विकं व्रजेत् १०

विदिक्षुचैव त्रिपदं द्विपदं त्वन्तरन्नयेत्
उपपीठं चतुःपङ्क्त्या कल्पयेत्पीठमुत्तमम् । ११

मध्ये द्वादशकेनैव गात्रकं परिकल्पयेत्
तत्पूर्वापरवृत्तिभ्यां द्वितयं द्वितयं भवेत् । १२

मध्यपङ्क्तिद्वयेनैव अष्टकं परिमार्जयेत्
एकीकृत्य ततस्सर्वानष्टकं तस्य पार्श्वयोः १३

त्रीणि त्रीणि तथाद्यन्ते मध्ये पङ्क्तिद्वये द्वयम्
तत्पदेचाष्टकं मृज्य मध्येचैव त्रयंत्रयम् । १४

एवमाद्यन्तपङ्क्तिभ्या मेकीकृत्य परामृजेत्
पद्मक्षेत्रस्य बाह्ये तु पञ्चकं परिमार्जयेत् । १५

शेषंतु कोष्ठकं प्रोक्तं द्विपदेनैव वीथिकाम्
गात्रकाख्यप्रदेशेतु शङ्खादीन् परिकल्पयेत् । १६

शङ्खं चक्रं गदां पद्मं दिक्क्रमेण समालिखेत्
मुसलं नन्दकञ्चैव शार्ङ्गं च वनमालिकाम् । १७

आग्नेयादीशकोणान्तं विन्यसेत्परितःक्रमात्
शिष्टं पङ्क्तिक्रमेणैव द्वारादि परिकल्पयेत् । १८

द्विचतुष्कक्रमेणैव द्वारंतु परिशोधयेत्
शोभं नवपदेनैव उपद्वारंतु द्वारवत् । १९

षट्पदैः सूक्ष्मशोभञ्च शिष्टकोणकम् ?
बहिः पङ्क्त्यंशमानेन रेखात्रयमथाचरेत् । २०

उपद्वारे विशेषेण मङ्गलाष्टकमालिखेत्
रजसा पूरयेत्पश्चात् शुद्धेन विविधेन च । २१

कर्णिकां कनकाभेन केसरं शोणितप्रभम्
दलजालं सितं प्रोक्तं कृष्णं चैवान्तरं परम् । २२

व्योमवृत्तं तथा कुर्यात् बाह्यं चारुणप्रभम्
पीठकोणं सितं कुर्यात् गात्रं श्यामनिभं भवेत्। २३

गात्रकोणान्तरं रक्तं बहिर्गात्रं तु शोणितम्
सितं कृष्णं च पीतं च क्रमाच्छेषत्रयं भवेत्। २४

शङ्खादीन् शुक्लवर्णेन विलिखेत्तस्य मध्यमे
वीथीं मरकताभेन द्वारं शुक्लेन पूरयेत्। २५

पीतं रक्तं च कृष्णं च श्यामं शोभादिकान् क्रमात्
सितं रक्तं तथा कृष्णं रेखात्रयमनुत्तमम्। २६

श्रीभगवान् —

इष्टसिद्धिप्रदंनाम मण्डलञ्चावधारय
इष्टसिद्ध्यर्चनाच्चैव इष्टसिद्धिमवाप्नुयात्। २७

चतुरश्रं पुरा कृत्वा बाहुहस्तप्रमाणतः
चत्वारिंशत्पदं कृत्वा क्षेत्रमध्यं विशेषतः। २८

अंशकानां भवेद्यत्र सहस्रं षट्शताधिकम्
इष्टसिद्ध्यर्चनाच्चैव सहस्रं षट्शताधिकम्। २९

मध्ये दशपदं विप्र पङ्कजं पूर्ववल्लिखेत्
पीठंतु पूर्ववत्कृत्वा बहिःपंक्त्या तु वीथिकां। ३०

तद्बहिः पञ्च पंक्त्या तु गात्रागारं तु शोधयेत्
मध्यपंक्तित्रयेणैव मध्ये कोणाष्टकं सृजेत्। ३१

[4]

पूर्वापरे चतुर्थं स्यात् मध्ये चैव चतुष्पदम्
एवमष्टकसंयुक्तमेकीकृत्य विलेपयेत् । ३२

अष्टादशपदेनैव प्रादक्षिण्यं परामृजेत्
कोणमध्यप्रदेशे तु पञ्चकोष्टं परामृजेत् । ३३

बहिष्षोडशकोष्ठेन प्रादक्षिण्येन लेपयेत्
शेषकोष्ठगणं सर्वमेकीकृत्य विलेपयेत् । ३४

एकपंक्त्या भवेद्वीथी शिष्टपंक्ति क्रमं शृणु
पंक्तित्रयेण विप्रेन्द्र अन्तर्द्वारादिकान् मृजेत् । ३५

पूर्वपंक्तिद्वयेनैव नयेत् शोभोपशोभितम्
सूक्ष्मशोभकञ्च चतुःकोणपार्श्वे परामृजेत् । ३६

कोणसार्धद्वितीये तु एकमेव पदं मृजेत्
एकपंक्त्या भवेद्वीथी प्रादक्षिण्येन शोधयेत् । ३७

तद्बहिःपदपंक्त्या तु वीथिकां परिकल्पयेत्
शिष्टं पंक्तित्रयेणैव पूर्ववत् द्वारवीथिकां । ३८

द्वारशोभ मुपद्वार मुपशोभं च सूक्ष्मकम्
पूर्ववत्कल्पयित्वा तु कोणदेशेषु पूर्ववत् । ३९

शिष्टपङ्क्त्या बहिर्वीथीं पूर्ववत्परितो मृजेत्
बहीरेखात्रयं कुर्यात् पञ्चकं वापि केवलम् । ४०

एवंकृत्वा विधानेन रजःपात्रविधिं शृणु
सपीठपङ्कजं विप्र पूर्ववत्परियोजयेत् । ४१

वीथिकां षट्पदाभेन गात्रमध्यं तु पीतलम्
बहिः प्रदक्षिणं श्यामं कोणभूमिं तथैव च । ४२

कोणगात्रान्तरालं तु रक्तवर्णेन पूरयेत्
बहिर्वीथीं सितेनैव अन्तर्वीथीं तु श्यामलाम् । ४३

सितादिवर्णभेदेन क्रमात्कुर्याच्चतुष्टयम्
कोणान्तस्थ पदद्वंद्वं रक्तं कृष्ण सितं क्रमात् । ४४

बहिर्वीथीं तु पीतेन तद्बाह्यं रक्तमेव च
सितादिपञ्चवर्णेन पञ्चकं परिपूरयेत् । ४५

तथा कोणद्वयं विप्र सितं श्यामं प्रकीर्तितम्
रेखात्रयं तथा कुर्यात् पञ्चकं पञ्चवर्णकम् । ४६

देवतानामथो वक्ष्ये स्थानं तु मुनिपुङ्गव
कर्णिकाग्रे तु संपूज्य अङ्गोपाङ्गं च पत्रके । ४७

गुणत्रयं केसरेषु मण्डलं तु त्रयं तथा
पीठदिक्ष्वष्टके विप्र दिक्पतीन् परिपूजयेत् । ४८

गात्रमध्ये विशेषेण शङ्खादीन् परिपूजयेत्
अन्तराले ऋगादींश्च वेदादीन् कोणमध्यमे । ४९

वीथिकासु च सर्वासु अनन्तादीन् प्रपूजयेत्
अनन्तो वासुकिश्चैव शङ्खपालस्तथैव च । ५०

उर्ध्वद्वारादिके सर्वे आदित्यादीन् प्रपूजयेत्
त्वष्टा विष्णुश्च पूषा च गरुडश्च तथैव च । ५१

कोणेषु वैघ्नं संपूज्य कुमुदादीन् तथान्तरे
बहिर्द्वारेषु विप्रेन्द्र सत्यादीन् परिपूजयेत् । ५२

सत्यः सुपर्णस्ताक्ष्र्यश्च गरुडश्च तथैव च
शोभोपशोभद्वारेषु पद्मचक्रगदादिकान् । ५३

कोणेष्वपि च सर्वेषु अग्न्यादि परिपूजयेत्
अग्निश्च पावकाश्चैव चित्रभानुर्विभावसुः । ५४

रेखात्रयेषु विप्रेन्द्र सुदर्शनादिपूजितम्
परिस्तरेषु दर्भेषु चण्डादीन् परिपूजयेत् । ५५

भृगुः—

मण्डलार्चनकालं किं वदस्व वदतां वर

श्रीभगवान्—

दीक्षायामुत्सवे चैव स्नपने च फलोत्सवे । ५६
दमनारोपणे चैव तथा पुष्पमहोत्सवे ॥

पवित्रोत्सवे विशेषे जयन्त्यां च तथैव च
कृत्तिकोत्सवकाले तु ग्रहणे सोमसूर्ययोः । ५७

विषुवे चायने चैव द्वादश्यां तु विशेषतः
प्रायश्चित्तेषु सर्वेषु वसन्तोत्सव एव च ।

मण्डलाराधनं कुर्यादन्यथा दोषकृद्भवेत्
मण्डलाराधनं श्रेष्ठं जघन्यं बिम्बपूजनम् । ५९

कुम्भमण्डलबिम्बाग्नौ पूजनं चोत्तमं भवेत्
उत्तमाराधनेनैव सर्वदोषक्षयं गतम् । ६०

सर्वपापहरं पुंसां राजराष्ट्रविवर्धनम्
चतुःस्थानार्चनाहीनं कर्म निष्फलतां नयेत् । ६१

तस्मात्सर्वप्रयत्नेन चतुःस्थानार्चनं यजेत्
चतुःस्थानमुत्तमं च त्रिस्थानं मध्यमं भवेत् । ६२

द्विस्थानमधमं चैव एकमाभासकं परम्
एकं तु बिम्बकं प्रोक्तं द्विस्थानं बिम्बपावकम् । ६३

त्रिस्थानं कुम्भसंयुक्तं चतुःस्थानं तु मण्डलम्
कुम्भमण्डलवह्निस्थं पश्चिमाभिमुखं यजेत् । ६४

देवं नारायणं विप्र अन्यथादोषकृद्भवेत्
तत्रस्था देवताः सर्वाः पश्चिमाभिमुखं यजेत् । ६५

वरुणादिनिॠत्यन्तं पूजयेत् सर्वदेवतान्
देवतान्विना विप्र द्वास्थदेवान्विना भवेत् । ६६

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
यन्त्रविधानं नाम षष्ठोऽध्यायः

## अथ सप्तमोऽध्यायः

भृगुः—

चक्राब्जमण्डल कीदृक् वदस्व परमेश्वर

भगवान्—

चक्राब्जमण्डलं वक्ष्ये विस्तरेणावधारय । १

सूत्रपातविधिं चैव मानवृद्धिं तथैव च

रजसा पूरणं चैव चक्रपूजाफलं तथा । २

मण्डपं पूर्ववत्कृत्वा अलंकृत्य विधानतः

तन्मध्ये वेदिकं कृत्वा पञ्चहस्तप्रमाणतः । ३

दृढासमंतथाकारं प्रागुत्तरत.... ....

.... .... दर्पणसन्निभम् । ४

चतुरङ्गुलकां कृत्वा आधारत्र्यङ्गुलं भवेत्

कुम्भवेदिं विशेषेण हस्तमानसमुन्नताम् । ५

विस्तारं तु विशेषेण चतुर्हस्तं त्रिहस्तकम्

पञ्चहस्तमथैवापि आधारं तु त्र्यंगुलं । ६

विस्तारायामसदृशा होमवेदिस्तथा भवेत्

अथवा तालविस्तार मुन्नतं तु त्र्यङ्गुलम् । ७

वेदिमध्ये लिखेद्विद्वान् मण्डलं चक्रसंज्ञकम्
चक्रं त्रिविधमुद्दिष्टमुत्तमाधममध्यमम् । ८

वक्ष्यामि चोत्तमं प्रोक्तं समासादवधारय
अक्षक्षेत्रे लिखेत् पद्मं पूर्ववत्तालमानतः । ९

वृत्तात्संजायते सर्वं वृत्तमध्यात्प्रजायते
पद्मबाह्ये नाभिनेमि एकधा वा द्विधा त्रिधा । १०

अरक्षेत्रं तु तद्बाह्ये बहिर्नेमिस्तु पूर्ववत्
चतुरङ्गुलमानेन नाभिनेमिः प्रकीर्तितः । ११

षडङ्गुलप्रमाणेन अरक्षेत्रं प्रकीर्तितम्
अरत्रिभागकं सूत्रं स्थापयेत् द्वयपार्श्वयोः । १२

द्व्यंशमानेन सूत्रेण भ्रामयेन्मन्त्रवित्तमः
अपरे तु तथाधः कुर्यान्मातुलुङ्गाकृतिर्भवेत् । १३

नेमिक्षेत्राद्बहिर्वीथ्यां पत्रवल्लीं लिखेद्बुधः
त्र्यङ्गुलं वल्लिमानं स्यात् बाह्यनेमि त्रियङ्गुलम् । १४

अरक्षेत्रं बहिःकार्यं षोडशाङ्गुलमानतः
अरस्थाने लिखेत् चक्रं द्वादशं षोडशं तु वा । १५

चतुर्दशाङ्गुलं चक्रं चतुरङ्गेन भूषितम्
अक्षं नाभिररं नेमिश्चतुरङ्गमिति स्मृतम् । १६

अक्षमङ्गुलकं प्रोक्तं नाभिनेमी तथैव च
चतुरङ्गुलमानं तु अरक्षेत्रं प्रजायते । १७

तदरं वृत्तसंकाशमश्राकारमथापि वा
अब्जपत्रसमाकारमिन्दीवरदलच्छदम् । १८

अर्धचन्द्रसमाकारं द्विजाण्डसदृशं तु वा
एवं द्वादशचक्रस्य अरक्षेत्रे विशेषतः । १९

तद्बहिर्नेमिभूभागं वह्लिक्षेत्रंतु पूर्ववत्
बहिर्नाभि तथा कुर्यात् अरक्षेत्रं तथा भवेत् । २०

तदरं पूर्ववत्कुर्यान्मानं पूर्ववदिष्यते
नेमिक्षेत्रं बहिः कुर्यात् प्रधयश्चबहिस्तथा । २१

द्विधावृत्तं वीथिसंघं व्योमवृत्तं बहिर्भवेत्
चतुरश्रं ततः कुर्यात् पीठादीन् पूर्ववल्लिखेत् । २२

रजसा पूरयेत् पश्चात् द्विविधेनोज्वलेन च .
पद्मंतु पूर्ववद्विप्र नाभि नेमि तु पीतलम् । २३

अरक्षेत्रं तु रक्तं स्यादरं वै कृष्णसन्निभम्
पत्रवल्लींतु शुक्लेन नाभिनेमि तु श्यामलम् । २४

एकद्वारकृतंचैव अरांते च प्रकल्पयेत्
इन्दीवरमातुलुङ्ग पद्मपत्र यवोदरम् । २५

पिप्पलोदरकश्चैव परशुं वज्रसन्निभम्
चतुरश्रं च वृत्तं च अर्धचन्द्रं च कूर्परम् । २६

शंङ्ख चक्रं द्वादशैते पूर्वादीनन्तु देशिकः
अक्षंतु पीतलं प्रोक्तं सर्वचक्रेषु संमतम् । २७

नाभिनेमिररक्षेत्रं वर्णभेदैः प्रपूरयेत्
यथाशोभानुरूपेण पूरयेच्च यथारुचि । २८

पूर्ववत्पत्रवल्लींतु नाभिनेमिसितं भवेत्
अरसंघं तु कृष्णेन अन्तरालं तु पीतलम् । २९

प्रधिसंघं विशेषेण नानावर्णैः प्रपूरयेत्
व्योमवृत्तं तथा कृष्णं पिठादीन् पूर्ववच्चरेत् । ३०

रेखात्रयं विशेषेण सितं रक्तं च कृष्णकम्
अन्तःपीठं विशेषेण पाण्डुरक्तेन पूरयेत् । ३१

चक्रत्रयसमायुक्त मुत्तमं परिकीर्तितम्
चक्रद्वयसमायुक्तं मध्यमं परिचक्षते । ३२

एकमप्यधमं प्रोक्तमित्येतत् त्रिविधं भवेत्
चक्रमध्ये यजेद्देवं नारायणमनामयम् । ३३

दलेषु वासुदेवादीन् सोमं व्योम्नि प्रपूजयेत्
नाभिक्षेत्रे यजेच्छ्रीञ्च नेमिक्षेत्रे सरस्वतीम् । ३४

अरक्षेत्रे जयाश्चैव अरे मूर्तिं समायजेत्
अरक्षेत्रे तथाङ्गेषु द्वादशादित्यकान् यजेत् । ३५

बाह्यारे तु विशेषेण केशवादीन्प्रपूजयेत्
प्रधिक्षेत्रे विशेषेण समुद्रादींश्च पूजयेत् । ३६

पीठादिके यथापूर्वं पूजयेदिन्द्रपावकौ
अनेकोपचारकैर्वापि द्वात्रिंशद्भिरथापि वा । ३७

षोडशै र्वा विशेषेण प्रोक्षणं स्नानमाचरेत्
यश्चक्रे पूजयेद्विद्वान् सोऽपि तत्पदमाप्नुयात् । ३८

अर्थार्थी चार्थमाप्नोति जयार्थी जयमाप्नुयात्
कामार्थी काममाप्नोति पुत्रार्थी पुत्रमाप्नुयात् । ३९

अश्वमेधाष्टकं पुण्यं प्राप्नुयाच्चक्रपूजनात्
प्राजापत्यशतं चैव गोसहस्रफलं तथा । ४०

पवित्रारोपणे चैव तथा स्नपन कर्मणि
प्रायश्चित्तेषु सर्वेषु दुर्निमित्तादिकेषु च । ४१

नृपरोगादिगे प्राप्ते शत्रुभिः परिपीडने
अनावृष्ट्यादिके प्राप्ते चक्राब्जे संयजेद्विभुम् । ५०

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
चक्राब्जमण्डलं नाम सप्तमोऽध्यायः

## अथ अष्टमोऽध्यायः

भगवान्—

कुण्डानां लक्षणं वक्ष्ये शृणु गुह्यं महामुने
वृत्तात्संजायते सर्वं वृत्तं मध्यात्प्रजायते । १

मण्डलस्येशकोणे तु कुम्भवेदिं प्रकल्पयेत्
तस्य पावकदिग्भागे कुण्डवेदिं प्रकल्पयेत् । २

दण्डके तु विशेषेण कुम्भवेदिं तु पूर्वके
मण्डलं मध्यमे भागे पश्चिमे कुम्भसंज्ञकम् । ३

सौम्यालाभे तदा विप्र दक्षिणादि प्रकल्पयेत्
बिम्बंतु पश्चिमे भागे सर्वत्रैव निवेशयेत् । ४

दक्षिणायान्तके विप्र उत्तरे बिम्बसंस्थितं
योनिनाभिसमायुक्त मञ्जमेखलकै र्युतम् । ५

षण्णवत्यङ्गुलं मानं सर्वकुण्डमकण्टकम्
अश्रं चापं तथा वृत्तं शङ्खं चक्रं च पङ्कजम् । ६

त्र्यश्रं पञ्चाश्रमुदितं षडश्रं सप्तकोणकम
अष्टाश्रं च नवाश्रं च गदा योनिमतःपरम् । ७

एवं चतुर्दशं कुण्डं तन्त्रेऽस्मिन् परमेष्ठिना
कुण्डमण्डलवेद्यार्धमानं मुष्ठ्यङ्गुलं भवेत् । ८

त्रिमुष्टिमात्रं तालं वा तद्वयं हस्तमिष्यते
तद्वयं दण्डमित्युक्तं तद्वयं धनुरुच्यते । ९

युग गोचर्मकश्चैव त-मानं संप्रकीर्तितम्
चतुरश्रस्य वृत्तस्य मानं मध्येन जायते । १०

तालमानेन सूत्रेण भ्रामयेन्मध्यसूत्रतः
तद्वृत्तपरिधेः पार्श्वे सूत्रमास्फालयेच्च तत् । ११

चतुःसूत्रप्रयोगेण चतुरश्रं प्रजायते
अर्धमानेन सूत्रेण मध्यकण्ठेन पातयेत् । १२

चतुर्दिक्क्रमयोगेन चतुरश्रं प्रजायते
चतुरश्रवशेनैव यद्वा वृत्तवशेन तु । १३

अन्यानि सर्वकुण्डानि तन्मानेन तु कारयेत्
चतुरश्रं खनेद्भूमौ हस्तमानप्रमाणतः । १४

तालमानमथैवापि त्र्यङ्गुलं नाभिमानकम्
तद्बहिस्तालमानेन मेखलात्रितयं भवेत् । १५

चतुरङ्गुलविस्तारमुन्नतं तावदेव तु
योनिं प्रकल्पयेदूर्ध्वे पश्चिमे कुण्डमध्यमे । १६

चरतुश्रवशेनैव यद्वा वृत्तवशेन तु
द्वशाङ्गुलप्रमाणेन आयतं परिकीर्तितम् । १७

विस्तारंतु विशेषेण दशभिः खण्डचन्द्रकम्
पृष्ठपार्श्वे लिखेद्विप्र षट्चतुर्द्व्यङ्गुलैर्युतम्। १८

अश्वत्थपत्रवत्कुर्यात् तन्नालं चतुरङ्गुलम्
त्रियङ्गुलं तु नहनं मुखे चैव षडङ्गुलम् १९

मध्यमेखलमानं स्यात् सुषिरं परिधेर्द्विज
कुण्डमध्ये लिखेत् पद्ममष्टपत्रं सकर्णिकम्। २०

मेखलस्योर्ध्वकोणेषु चक्र शङ्खादिकान् लिखेत्
अङ्गुलोन्नतमानेन मृद्भिरेव प्रकल्पयेत्। २१

मृदा संलेपयेत्पश्चात् गोमयेन विचक्षणः
सुधाचूर्णैरलंकृत्य तालमानेन पीठकम्। २२

चतुरश्रमिदं प्रोक्तं चापकुण्डमथोच्यते
पूर्ववृत्तप्रमाणेन तदर्धं देशिकोत्तमः। २३

तन्मानं भ्रामयेच्चापं सज्यं तद्व्यमानकम्
यादृग्विधं भवेत् कुण्डं तादृगेव तु मेखला। २४

योनिं कुण्डेषु सर्वेषु कल्पयेच्च द्विजोत्तम
योनिकुण्डेन योनिः स्यात् पद्मकुण्डेन पङ्कजम्। २५

चापं षडङ्गुलं प्रोक्तं सज्यं षट्त्रिंशकं मुने
यद्वाङ्गुलवशेनैव सर्वकुण्डं प्रकल्पयेत्। २६

चतुर्विंशात्यङ्गुलंचाग्रं चापं षष्ट्यङ्गुलं भवेत्
सज्यं षट्त्रिंशकं प्रोक्तं वृत्तार्धं षोडशाङ्गुलम्। २७

पद्मकुण्डं तदेव स्यात् चक्रकुण्डं तथैव च
त्र्यश्रकुण्डं विशेषेण द्वात्रिंशदङ्गुलं मुने। २८

द्वात्रिंशदङ्गुलं मानं पट्टायामं प्रकीर्तितम्
दक्षिणोत्तरपार्श्वे तु सूत्रमास्फालयेच्च तत्। २९

योनिकुण्डमथो वक्ष्ये चतुरश्र प्रजायते
दशाङ्गुलप्रमाणेन वायुनैऋतकोणयोः। ३०

कोणाग्रे स्थापयेत्सूत्रं भ्रामयेदर्धचन्द्रकम्
अर्धचन्द्रशशिशृङ्गात् पूर्वमध्याच्च पातयेत्। ३१

दक्षिणोत्तरपार्श्वे तु अग्रमश्वत्थपत्रवत्
योनिवत् संनिवेशस्स्यान्न योनिं परिकल्पयेत्। ३२

अब्जकुण्डमथो वक्ष्ये पूर्ववद्वृत्तमालिखेत्
ऊर्ध्वमेखलयामध्यमर्धाञ्चाप्यथमेखलां। ? ३३

एवमष्टाङ्गुलेनैव पद्मपत्रं प्रकल्पयेत्
क्रमेण प्रणवं कुर्यात् बलिपीठाब्जपत्रवत्। ३४

अष्टपत्रमथो वापि द्वादशं वापि कारयेत्
शङ्खकुण्डमथो वक्ष्ये पूर्वपश्चिमदीर्घकम्। ३५

पूर्ववद्वृत्तमालिख्य द्वादशाङ्गुलमानतः
तद्वृत्तपरिधेःपूर्वं अर्धचन्द्रं समालिखेत् । ३६

चतुरङ्गुलमानेन भूपद्मं परिकल्पयेत्
अथ पश्चिमभागे तु शङ्खस्याग्रं प्रकल्पयेत् । ३७

अग्रं तु योनिवत्कुर्यात् तत् षडङ्गुलमानतः
उत्तरे मेखलापार्श्वे किञ्चिन्नाभि प्रकल्पयेत् । ३८

मेखलात्रितयं कुर्यात् तद्वदेव च दक्षिणम्
चतुर्दिक्षु विशेषेण ज्वालां काश्चित्प्रकल्पयेत् । ३९

चक्रकुण्डमथो वक्ष्ये वृत्तं पूर्ववदालिखेत्
नीचोर्ध्वमेखलां सम्यक् द्व्यङ्गुलेन प्रकल्पयेत् । ४०

अष्टाङ्गुलेन तन्मध्ये अरक्षेत्रं प्रकल्पयेत्
द्वादशाष्टादशं वापि द्विजाण्डसदृशं भवेत् । ४१

अक्षंतु कुण्डमध्यं स्यान्नाभिर्नेमिर्द्विमेखला
चतुर्ज्वालां प्रकल्प्यैव शिखावन्मुनिसत्तम । ४२

पञ्चाश्रकमथो वक्ष्ये अवधारय सांप्रतम्
वृत्तं तु पूर्ववत्कृत्वा पञ्चधा परिरञ्जयेत् । ४३

कर्णसूत्रं बहिःकृत्वा वह्नेर्वह्नेर्विशेषतः
पद्मसूत्रं बहिः कुर्यात् सूत्रैरष्टादशार्धकैः । ४४

पट्टसूत्रस्य मध्यं स्यात् किंचित् प्रह्वं समाचरेत्
तद्वशान्मेखलां कुर्यात् षडश्रमधुनोच्यते । ४५

वृत्तश्च पूर्ववत्कुर्यात् त्रिःपञ्चाङ्गुलमानतः
त्रिःपञ्चाङ्गुलमानेन सूत्रस्योपरि कल्पयेत् । ४६

वृत्तन्तु पूर्ववत्कुर्यादर्धमानेन चाङ्कयेत्
षट्चिह्नं जायते विप्र षट्सूत्रं पट्टयेद्बहिः । ४७

पट्टायामं ततः कृत्वा चिह्नसूत्रं बहिः क्षिपेत्
तद्वच्च मेखलां कुर्यात् सप्ताश्रञ्चावधारय । ४८

सप्तधा चाङ्कयेत्वृत्तं कोणसूत्रं बहिःक्षिपेत्
कोणात्कोणान्तरं कुर्यात् पट्टायामं प्रकीर्तितम् । ४९

अष्टकोणविधिस्तद्वत् नवकोणविधिस्तथा
गदाकारमथो वक्ष्ये पूर्वपश्चिमदीर्घकम् । ५०

पूर्ववद्वृत्तसंयुक्तं ह्यङ्गुलं तु विहीनकम्
भूतात् भूते तु कर्तव्यं षट्चतुर्ह्यङ्गुलैककम् । ५१

तत्कुण्डपश्चिमे भागे अष्टाङ्गुलसमायुतम्
किञ्चित्प्रणवसंयुक्तं दण्डाकारं विशेषतः । ५२

एवं चतुर्दशं कुण्डं तन्त्रेऽस्मिन् मुनिपुङ्गव
उत्सवे तु नवाश्रं स्यादष्टाश्रं वापि कारयेत् । ५३

चतुरश्रमथैवापि एकाश्रं वापि कारयेत्
पवित्रारोहणे विप्र अष्टकुण्डं प्रकल्पयेत् । ५४

चतुष्कुण्डमथैवापि एककुण्डं तु कल्पयेत्
प्रतिष्ठायां विशेषेण तथैव परिकल्पयेत् । ५५

पत्रपुष्पोत्सवे चैव तथान्तकलशे द्विज
कुण्डकर्मविधिः प्रोक्तः कुम्भसंस्थापनं शृणु । ५६

खारिद्वयेन संपूर्णं महाकुम्भं प्रकीर्तितम्
तदर्धमुपकुम्भं च परिकुम्भं तदर्धकम् । ५७

तन्मानं वर्धनीचैव वस्त्रेण परिवेष्टयेत्
अङ्गुलान्तरकं वापि अक्षमात्रा तु वा भवेत् । ५८

व्रीहिकोपरिसंस्थाप्य सौवर्णं राजतं तु वा
ताम्रं वा मृण्मयं वापि यथा वित्तानुसारतः । ५९

वस्त्रे संवेष्टयेत्पश्चात् शरावैरपिधाय च
स्तम्बकैर्नालिकेरैश्च क्रमुकैः फलवृन्तकैः । ६०

फलैर्नानाविधैश्चैव नारिकेलफलैरपि
रत्नहेमसमायुक्तमष्टमङ्गलसंयुतम् । ६१

पालिकैश्च समायुक्तं दीपकुम्भसमन्वितम्
स्वर्णपट्टसमायुक्तं क्षौमवस्त्रसमायुतम् । ६२

कुम्भमण्डलकुण्डेषु परिकुम्भं तु विन्यसेत्
ध्वजैश्चतोरणैर्युक्तं द्वारकुम्भोपशोभितम्। ६३

एवं दीक्षाविधाने तु प्रतिष्ठाद्युत्सवेषु च
अन्यथा दोषमाप्नोति नात्र कार्या विचारणा ।६४

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
कुण्डविधिर्नाम अष्टमोऽध्यायः

---

## अथ नवमोऽध्यायः

श्रीभगवान्—

अभिषेकमथो वक्ष्ये आचार्याणां विशेषतः
क्षत्रियाणां विशेषेण साधकानां विशेषतः। १

विष्ण्वालये विशेषेण मण्डपं कारयेद्बुधः
मण्डपं समलंकृत्य तोरणाद्यैरलंकृतम्। २

वितानाद्यैरलंकृत्य दर्भमाल्यैश्च शोभयेत्
अङ्कुरानर्पयित्वा तु पूर्वेद्युः कर्मवासरे। ३

सप्तमे पञ्चमे वापि तृतीयेऽहनि वा भवेत्
पूर्वे द्वारान्विते पश्चात् सद्यो वा सकलं चरेत्। ४

कौतुकं बन्धयेद्धीमान् पूर्वेद्युश्च निशामुखे
चतुःस्थानार्चनं विप्र कारयेद्विधिचोदितम्। ५

अभिषेकविधिं ब्रह्मन् इष्टसिद्धिप्रदं यजेत्
चक्राब्जमण्डलं वापि कारयेच्छास्त्रवित्तमः ६

कुम्भाधिवासनं रात्रौ शयने सन्निवासयेत्
पञ्जरस्थस्य देवस्य पश्चिमे शयनं चरेत् । ७

पञ्चभारप्रमाणेन धान्येन परिपूजयेत्
तदर्धतण्डुलश्चैव तदर्धं तिलमेव च । ८

नववस्त्रे विनिक्षिप्य व्याघ्रचर्म तथोपरि
तदूर्ध्वे कंबलं न्यस्य पीठस्योपरि साधकः । ९

तदूर्ध्वेऽङ्गुलिकां न्यस्य चित्रवस्त्रं तथैव च
पश्चोपधानसंयुक्तं प्रच्छादनपटं तथा । १०

मृद्वास्तरणसंयुक्तं शयनं परिकल्पयेत्
क्षीरोदार्णवसंस्थितं अनन्तं परिपूजयेत् । ११

कुम्भमण्डलवह्नौ तु पूजनं पूर्ववच्चरेत्
बलिं च सर्वतो दद्यात् पुराणं श्रावयेत्सुधीः १२

प्रभातकाले चोत्थाय स्नानं पूर्ववदाचरेत्
द्वारादीनि समभ्यर्च्य कुम्भादीन् परिपूजयेत् । १३

कुम्भानुद्धृत्य तान् सर्वान् द्वादशान् चतुरोऽपि वा
चतुष्कुम्भं तु तन्मध्ये अष्टदिक्ष्वष्टकं न्यसेत । १४

व्रीहिकोपरि संस्थाप्य सूत्रवस्त्रादिवेष्टितम्
शरावं कूर्चसंयुक्तं शुद्धद्रव्यसमन्वितम् । १५

पूर्वे पुष्पं प्रदद्यात्तु आग्नेये पत्रसञ्चयम्
याम्ये फलोदकञ्चैव नैऋते पञ्चगव्यकम् । १६

वारुणे तीर्थतोयञ्च वायव्ये गन्धतोयकम्
सौम्ये चाक्षततोयं तु ईशान्ये भूतिसंज्ञकम् । १७

मध्ये चतुष्टये विप्र आग्नेयं रत्नतोयकम्
नैऋते लोहतोयं च वायव्ये व्रीहितोयकम् । १८

ईशान्ये सर्व्ववस्तूनि क्रमाद्द्रव्यं निवेशयेत्
उत्पलत्रितयश्चैव केतकीद्वितयं तथा । १९

शतपत्रं जातियुग्मं नन्द्यावर्त्तद्वयं तथा
एतानि दश पुष्पाणि निक्षिपेत् कुम्भमध्यतः । २०

पुष्पालाभे तु जातिस्यात्पत्रपूरमथोच्यते
तुलसीद्वितयञ्चैव दमनिद्वितयं तथा । २१

सटाभद्रा च दूर्वा च सहदेवी तथैव च
बिल्वपत्रञ्च इत्येते निक्षिपेत् पावकोदके । २२

पत्राणामप्यभावे तु तुलसीदलमुत्तमम्
कदली पनसञ्चाम्रं बिल्वमामलकं तथा । २३

नालिकेरञ्च हव्यञ्च लिकुचं दाडिमं भवेत्
एतानि निक्षिपेद्याम्ये फलाभावे तु दाडिमम्। २४

गोमूत्रं गोमयं क्षीरं दधिसर्पिश्च पञ्चमम्
गव्यानामप्यलाभे तु घृतमेकं प्रशस्यते। २५

नादेयं नैर्झरं ह्रादं सामुद्रं पौष्करं तथा
हैमञ्च वार्षिकञ्चैव कर्पूरागरुकं तथा। २६

एलालवङ्गतकोलवचाकर्पूरमेव च
एतानि गन्धतोये तु निक्षिपेत्तन्त्रपारगः। २७

एलादीनामलाभेतु कर्पूरं संप्रचक्षते
व्रीहितण्डुलकञ्चैव प्रियङ्गुं कम्बुसंज्ञकम्। २८

कलमां रक्तशालिञ्च वेणुं चैव यवं तथा
अक्षतानामभावे तु कलमापरिचक्षते। २९

त्रेताग्निभूतिकं चैव नित्यहोमाग्निभूतिकम्
यागाग्निभूतिकं चैव उत्सवाग्नि विभूतिकम्। ३०

भूतीनामप्यलाभे तु नित्यकुण्डविभूतिकम्
मणिं मरकतञ्चैव वैडूर्यं पुष्परागकम्। ३१

गोमेधश्चेन्द्रनीलञ्च वज्रं मौक्तिकमेव च
प्रवालं स्फटिकञ्चैव पुष्पगं ब्रह्मरागकम्। ३२

रत्नानामप्यलाभे तु मौक्तमेकं प्रशस्यते
सुवर्णं रजतं ताम्रमायसं त्रपुकं तथा । ३३

रजीन्द्र ! मारकूटञ्च लोहान्येतानि निक्षिपेत्
शालिं व्रीहिं तथाचैव षष्टिकं यववेणुकम् । ३४

गोधूमतिलमुद्गं च शिम्बमाषकुलत्थकम्
एतानि मारुते कुम्भे निक्षिपेन्मुनिसत्तम । ३५

ईशाने सर्ववस्तूनि निक्षिपेत्तन्त्रपारगः
यन्त्रन्यासक्रमेणैव उद्धारक्रम इष्यते । ३६

केशवाद्यैश्च मन्त्रैश्च स्थापयेद्विधिपूर्वकम्
स्नानं पुरुषसूक्तेन विष्णुसूक्तेन वा भवेत् । ३७

अन्तरान्तरयोगेन स्नानानां च महामते
अर्घ्यं गन्धं च पुष्पं च धूपं चैव निवेदयेत् । ३८

आसने तु समारोप्य अभिषेकं समाचरेत्
शुद्धस्नानं ततः कृत्वा नीराजनमथाचरेत् । ३९

अलंकृत्य यथा न्यायं यागभूमिं समाविशेत्
आसने सन्निवेश्याथ पट्टबन्धमथाचरेत् ४०

भट्टमाचार्यभूयश्च तदग्रेण जगद्गुरुम्
आचार्यं दृष्टमात्रेण देववत्प्रतिभावयेत् । ४१

आसनं पादुकेचैव छत्रं चामरमेव च
वाहनं केतुदण्डश्च चिह्नं काहलमेव च । ४२

शङ्खभेरीनिनादश्च द्वारपालश्च भूषणम्
कांस्यतालं च चिह्नं च प्रदद्याद्विष्णुसन्निधौ । ४३

कालचिह्नं कलंचैव प्रदद्यात् विष्णुसन्निधौ
राजा चात्र विशेषेण अभिषेकं समाचरेत् । ४४

अष्टोत्तरशते निष्के अभिषेकं प्रकल्पयेत्
नवरत्नसमायुक्तं त्रपुकाञ्चन संयुतम् । ४५

इतिपूर्वक्रियासर्वं द्विजवत्सर्वमाचरेत्
मुहूर्ते शोभने प्राप्ते अभिषेकं समाचरेत् । ४६

ब्राह्मणः क्षत्रियश्चैव वैश्यशूद्रैवमादिकैः ?
नृत्तगीतसमायुक्तं जयशब्दसमन्वितम् । ४७

वेदघोषसमायुक्तं शङ्खनादसमन्वितम्
अभिषेकं ततः कृत्वा दद्यादाचमनं तथा । ४८

नेत्रबन्धं ततः कृत्वा आयुधानि च संस्पृशेत्
उदस्थानानि भाण्डानि मङ्गलानि च दर्शयेत् । ४९

राजचिह्नानि सर्वाणि उत्तमासनपूर्वकम्
प्रणमेद्दण्डवद्भूमौ जनैस्सर्वैरतन्द्रितः । ५०.

वैश्यश्चेत्तु विशेषेण अभिषेकादिकं विना
पालशब्दं वदेद्विप्र शूद्रश्चेत् दास्यकं वदेत् । ५१
ब्राह्मणः सर्ववर्णानां राजा राष्ट्रस्य कारणम् ॥

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
अभिषेकविधिर्नाम नवमोऽध्यायः

---

## अथ दशमोऽध्यायः

श्रीभगवान् —

राजकार्यमथो वक्ष्ये समासादवधारय
राज्ञश्शरीरं राष्ट्रं हि राजा तज्जीव उच्यते । १

राजानश्चैव राष्ट्रञ्च तस्माद्रक्ष्यं द्वयं बुधैः
तद्राष्ट्रस्य विशेषेण राज्ञः प्राधान्यमुच्यते । २

राजा गुरुर्जनानाञ्च वर्णानां ब्राह्मणो गुरुः
क्षतात्सन्त्रायते जन्तोः क्षत्रियस्स उदाहृतः । ३

अनुरागात् प्रजानां च राजा इत्यभिधीयते ।
भूरक्षणपरश्चैव भूमिपाल इति स्मृतः ४

नाराणियमनाच्चैव नरेशस्समुदाहृतः
चेरकेरलपाण्ड्यश्च अभिषेकपरो भवेत् । ५

अन्येषां प्राणिसर्वेभ्यः पट्टबन्धं प्रकाशयेत्
वर्णानाञ्च द्विजादीनां जन्मकर्म प्रकीर्त्यते । ६

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणस्समुदाहृतः
क्षत्रियायां विशेषेण क्षत्रियेण च भूभुजः । ७

तथापि वैश्यशूद्राणां जन्मसंपत्तिरुच्यते
अध्यापनं चाध्ययनं याजनं यजनं तथा । ८

दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः
अध्ययनञ्च यजनं दानं वृत्तिश्च भूभुजाम् । ९

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्
यज्ञदानपःकर्मण्यूहापोहविचक्षणः । १०

शक्तित्रयसमोपेतो बलवान् कोशवर्धकः
स्वाम्यमात्यसुहृत्कोश राष्ट्रदुर्गबलान्वितः । ११

चारेणचिरयुक्तश्च धर्मशास्त्रार्थकोविदः
नीतिशास्त्रपरश्चैव गुणवान् ब्राह्मणप्रियः । १२

सर्वावयवसंयुक्तस्सर्वकल्याणकारणः
स्वराष्ट्ररक्षणपरः परराष्ट्रस्य पीडनः । १३

वाहनारोहणे दक्षः अर्थशास्त्रार्थकोविदः
वेदवेदाङ्गतत्त्वज्ञो देवतासमदर्शनः । १४

देवताराधनपरो विष्णुचिन्तापरस्सदा
बन्धुभृत्यसमायुक्तो गुरुभक्तिरतः सदा। १५

अर्थार्जनपरश्चैव बालरक्षणतत्परः
अश्वारोहणदक्षश्च द्वन्द्वयुद्धविशारदः। १६

मल्लयुद्धपरश्चैव वश्यशास्त्रपरिश्रमः
सर्वमन्त्रपरश्चैव गुरुवाक्यप्रमाणतः। १७

गीतनृत्तपरश्चैव पुराणश्रुतितत्परः
स्वदारनिरतश्चैव परदारविवर्जितः। १८

अनेकदानसंयुक्त स्तन्त्रीवादनसंस्कृतः
गीतश्रीगीतनिपुणः वाद्यनृत्यविशारदः। १९

एभिरेव गुणैर्युक्तं राजानमभिषेचयेत्
सदाचारमथो वक्ष्ये क्षत्रियाणां विशेषतः। २०

प्रभाते बोधकैर्युक्त श्शयनादपिचोत्थितः
मुखदानं ततः कुर्यात् ब्राह्मणेभ्यो विशेषतः। २१

घृतप्रस्थं च चषकं स्वर्णवस्त्रधृतं तथा
मलमूत्रपुरीषादीन् संविसृज्य रहस्यतः। २२

प्रातः स्नानं ततः कुर्यादुष्णतोयेन नित्यशः
स्नानीय द्रव्यसंयुक्त मभ्यङ्गादि समन्वितम्। २३

दिवाकरोदयात्पूर्वं सन्ध्यावन्दनमाचरेत्
गायत्रिया जपं कृत्वा उपस्थानं समाचरेत् । २४

आत्मार्थं यजनं कुर्यात् यन्त्रं विष्णुमथोऽपि वा
उभयं वा सदा कुर्यात् तर्पणादिपुरस्सरम् । २५

ताम्बूलदानं विप्राणां गोदानं सम्यगाचरेत्
कन्यादानं तिलंचैव रक्तवस्त्रं सुवर्णकम् । २६

आशीर्वादं गृहीत्वा तु मन्त्रपूताक्षतं द्विजैः
देवालयगतांस्तीर्थान् प्रसादं परिगृह्य च । २७

दैवब्राह्मणकार्यं च श्रुत्वा सर्वं समाचरेत्
अलंकृत्य यथान्यायं भूषणाद्यनुलेपनैः । २८

सभामण्डपमासाद्य आसने चाधिवासयेत्
व्यवहारान्नृपः पश्येद्ब्राह्मणैः सह नित्यशः । २९

शङ्खभेरीनिनादेन जयशब्दसमाकुलैः
चामरैस्तालवृन्तैश्च व्यजनैः परिवीजितः । ३०

स्त्रीरत्नगणसंयुक्तं भेरीशब्दसमन्वितम्
बहुदीपसमायुक्तं वितानाद्यैरलंकृतम् । ३१

परराष्ट्रगतान् शत्रून् वधूः संवीक्ष्य भूभुजः ?
परराजागतान्पत्रान् श्रावयेद्भूभुजोत्तमः । ३२

ग्राह्याग्राह्य इतिज्ञात्वा सचिवैस्सह भूभुजः
ग्राह्यं गृहीत्वा राजेन्द्रः अग्राह्यं परिवर्जयेत् । ३३

मित्रामित्रे विदित्वा तु तत्तत्कार्यं समाचरेत्
जनान् सर्वान् विसृज्याथ गृहवाटं प्रवेशयेत् । ३४

मातापित्रोर्गृहं गत्वा प्रणमेत् दण्डवद्भुवि
श्रुत्वा तद्वाक्यमादाय तत्तत्कार्यं समाचरेत् । ३५

स्वगृहेषु स्वयं प्राप्य तत्तत्कार्यं समाचरेत्
आत्मानं यजनं कुर्याद्यन्त्रं विष्णुमथापि वा । ३६

उदयेवाससाकुर्यात् तत्तत्कार्यं समाचरेत्
आहार्यादीन् विसृज्याथ सूक्ष्मवस्त्राणि धारयेत् । ३७

श्रमालयं समासाद्य श्रमकार्यं समाचरेत्
उत्तानतं ततः कृत्वा मण्डनं च विसर्जयेत् । ३८

अथ स्नानं ततः कृत्वा देवागारं प्रवेशयेत्
पूजयित्वा च देवेशं हविष्यं च निवेद्य च । ३९

भोज्यासने समासीनो भोजनं सम्यगाचरेत्
भिषजस्सह राजेन्द्र भोजयेत्स्वबलैस्सह । ४०

सुतैश्च बन्धुवर्गैश्च भृत्यवर्गैस्तथैव च
भोजनासनवेलायां शङ्खभेरीं निनादयेत । ४१

भोजनेधृत्यकाले ? तु तथैव परिघोषयेत्
भोजनं शोधयेत्पूर्वं भुक्तद्रव्यमशेषतः । ४२

शनिवारे बुधे चैव तैलाभ्यङ्गं समाचरेत्
जन्मऋक्षे विशेषेण स्वर्णदानं समाचरेत् । ४३

गन्धालेपं ततः कुर्यात् भोगकाले विशेषतः
शुक्रवारदिने काले विष्णुदर्शनमाचरेत् । ४४

क्रोशद्वयं बहिर्ग्रामात् विचरेत्परिकरैस्सह
दिने दिने विशेषेण गजाश्वांश्चावलोकयेत् । ४५

परिक्रामन्परिकरे राज्यकार्यं विचिन्तयेत्
अयने विषुवे चै व ग्रहणे सोमसूर्ययोः । ४६

जन्मऋक्षे विशेषेण स्वर्णदानं समाचरेत्
दानेन दह्यते सर्वं तस्माद्दानं विशिष्यते । ४७

धर्मेण कारयेद्राज्यमन्यथा दोषकृद्भवेत्
सायाह्ने समनुप्राप्ते नीराजनमथाचरेत् । ४८

देववत्कारयेद्राज्ञां पुरोहितजनैस्सह
स्त्रीसभामण्डपे प्राप्ते नीराजनमलोकयेत् । ४९

भोजनं कारयेदन्ते शयने सन्निवेशयेत्
रक्षापरिकरैस्सार्धं राजकार्यं विचिन्तयेत् । ५०

एवं दिने दिने कुर्यात् राजा नित्यमतन्द्रितः
राजा राष्ट्रविवृद्ध्यर्थं विष्णुपूजां समाचरेत् । ५१

तत्पूजार्थं विशेषेण नगरग्रामपत्तनम्
कारयेच्छुद्धदेशे तु कर्षणादीन् प्रकारयेत् । ५२

ब्राह्मणानां निवासः स्याद्ग्रामश्चाग्रहारकम्
राजावासं पुरं प्रोक्तं वैश्यानां पत्तनं भवेत् । ५३

जनत्रयसमायुक्त नगरग्रामपत्तनम्
दुर्गावाससमायुक्तं नगरं संप्रकारयेत् । ५४

नदीतीरे विशेषेण ग्रामं कुर्याद्विचक्षणः
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । ५५

चतुस्सहस्रकं वापि उत्तमाधममध्यमम्
तदर्धं वा तदर्धं वा यथावित्तानुसारतः । ५६

ब्राह्मणान् वेदविदुषः श्रोत्रियान् ग्राहयेत्सुधीः
ब्राह्मणान्नपरीक्षेत कदाचिद्राजवर्त्मनः । ५७

ग्रामादि कारयेद्विद्वान् शुद्धदेशे मनोरमे ॥

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
राजलक्षणं नाम दशमोऽध्यायः

---

## अथ एकादशोऽध्यायः

श्रीभगवान्—

ग्रामविन्यासकं वक्ष्ये अवधारय सांप्रतम्
पुण्यक्षेत्रे नदीतीरे पर्वताग्रे त्रिकेपि वा। १

देवालयार्थं वा कुर्यात् ग्रामार्थं देवतालयम्
ग्रामात्पूर्वं स्वतन्त्रं स्यात् परतन्त्रं तु पश्चिमम्। २

एकविंशायनां वीथीं क्रोशमात्रं तु विस्तृतम्
ओतं प्रोतं तथा कुर्यात् ग्रामश्चैवोत्तमो भवेत्। ३

तदर्धं मध्यमं प्रोक्तं तदर्धमधमं भवेत्
अयुग्मवीथिकायुक्तं वीथिद्वयमथापि वा। ४

सप्तपञ्चत्रयं वापि ओतप्रोत क्रमेण तु
कृत्वा एतत्क्रमेणैव कारयेद्ग्रामवर्धनम्। ५

ब्राह्मन्तु मध्यमं भागं दैविकं तदनन्तरम्
मानुषं तु तृतीयं स्यात् पैशाचं वै चतुर्थकम्। ६

पैशाचे देवतावासं ब्राह्मे वै विष्णुमन्दिरम्
बहिः प्रदक्षिणे विप्र वीथिकां संप्रकारयेत्। ७

एकपीठमथो वापि द्वितयं त्रितयन्तु वा
ग्रामपूर्वापरे विप्र विष्णुमन्दिरमाचरेत्। ८

आसनं शयनं वापि यानारूढमथापि वा
वाराहं पूर्वदिग्भागे आग्नेय्यां वै नृसिंहकम् । ९

याम्ये हयाननं प्रोक्तं नैरृते श्रीधरं भवेत्
वारुणे वासुदेवं तु मारुते वामनं तथा । १०

सौम्ये तु राघवं प्रोक्तं माधव मीशके बुधः
तद्बहिर्वीथिकां प्राप्य रविसोमं च पूर्वके । ११

आग्नेये भैरवं स्थानं याम्ये वै मकरध्वजम्
षण्मुखं नैरृते प्रोक्तं वारुणे चैव कन्यकाम् । १२

वायव्ये मदनं प्रोक्तं मातृस्थानं तथोत्तरे
ईशाने शङ्करं न्यस्य केवले विष्णुमंदिरम् ? १३

तटाकं सर्वदिग्देशे गर्तं कूपं तथैव च
नगरे मध्यदेशे तु राजप्रासादमाचरेत् । १४

प्रासादस्य तु बाह्ये तु गृहिणीवासमाचरेत्
प्राकारं परितःकुर्यात् द्वारगोपुरशोभितम् । १५

तद्बहिर्वा न स्यादश्वावासं प्रकल्पयेत्
गजावासं च कूपे स्यात् भोजनागारमेव च १६

बही रक्षाजनावासं स्ववाहकजनैर्युतम्
रथकारजनैश्चैव गन्धपाकजनैस्तथा । १७

आपणान्वीथिकां चैव वहिर्वीथीं प्रकल्पयेत्
दानदेशनिवासं ? च यथाभिमतिदेशिकः । १८

पुरदुर्गं बहिःकुर्यात् जलागारं बहिस्ततः
शिलासालं भूमिसालं यन्त्रतालसमन्वितम् । १९

उद्यानं सर्वतः कुर्यात् कूपं सर्वत्र कारयेत्
प्रासादग्रामनिर्माणं निमित्तात् परिकल्पयेत् । २०

उपश्रुतिमुपश्रुत्य मङ्गलावाक्यगृह्यताम् ?
अमङ्गलं परित्यज्य गौलिर्दक्षिणतश्शुभम् ? २१

वामे वाजि बिनाशं स्याद्दोषस्याभिप्रकल्पयेत् ?
उद्योगगमने काले नारीपूर्णघटं शुभम् । २२

भेरीशङ्खनिनादं च तालघोषं तथैव च
क्षीरकुम्भं सुराकुम्भं दर्शयेत्शुभसंसदि । २३

दुर्न्निमित्ते सति ब्राह्म मष्टोत्तरशतं हुवेत्
प्राणाय्रामदशं वापि बिलादग्रेथवाप्यलम् । ? २४

भूपरीक्षाविधिं कुर्याच्छास्त्रदृष्टेन वर्त्मना
अधिकेचोत्तमाभूमि स्समश्चेन्मध्यमा भवेत् । २५

न्यूनं चेदधमाभूमिरधमं परिवर्जयेत्
ततः प्रवेशबलिं कुर्यात् व्रीहिबीजेन देशिकः । २६

शङ्खवाद्यसमायुक्तं स्वस्तिसूक्तेन संयुतम्
इन्द्रादि ब्रह्मपर्यन्तं पञ्चरात्रेण वर्त्मना । २७

शङ्कोपस्थापनं कुर्यात् दिक्षुवाथ विदिक्षु च
वीथीं प्रकल्पयेद्विद्वान् देवागारं तथैव च । २८

शङ्कुस्थापनकाले तु रत्नलोहादिकान् न्यसेत्
देवागारे विशेषेण कर्षणं सम्यगाचरेत् । २९

सप्तधा कर्षयेद्भूमिमालवाल प्रकल्पयेत्
बीजावापं ततः कृत्वा जलसेचनमाचरेत् । ३०

फलपाकावसानञ्च रक्षां कुर्यात्समन्ततः
फलपाकावसाने तु गवान्तृप्तिश्च कारयेत् । ३१

चतुरश्रं ततः कृत्वा खननं सम्यगाचरेत्
वसुधां पूरयेत्पश्चात् गण्डशैलैः प्रपूरयेत् । ३२

सिकतैः पूरयेत्पश्चात् जलपूरणमाचरेत्
हस्तपादैर्द्रढीकृत्य मादुकोपलकं न्यसेत् । ३३

आधारोपरि विन्यस्य प्रासादं परिकल्पयेत्
उपपीठोपरि वापि केवलं वापि कारयेत् । ३४

नगरं द्राविडं वापि केसरं च प्रकारयेत्
वृत्तं वृत्तायतं वापि चतुरश्रायतन्तु वा । ३५

कूटद्वारमथोवापि शालागारमथापि वा
उपानदादि संयुक्तं पादप्रस्तरशोभितम् । ३६

विमानैर्विविधैर्युक्तं शालापञ्जरभूषितम्
तोरणैश्च समायुक्तं मण्डपैश्च समायुतम् । ३७

प्राकारगोपुरैर्युक्त मन्तर्वीथिकया युतम्
आग्नेये मानसस्थानं याम्ये गन्धालयं परम् । ३८

श्रीस्थानं नैर्ऋते प्रोक्तं पानीयं वारुणे परम्
वायव्ये नागराजानां भक्तानां सौम्यगे परम् । ३९

सौम्येशानकयोर्मध्ये विष्वक्सेनं प्रकल्पयेत्
भगवत्प्रमुखं पश्चात् गरुत्मन्तं नियोजयेत् । ४०

चण्डश्चैव प्रचण्डश्च द्वारपार्श्वे निवेशयेत्
दुर्गां गणपतिं चैव ईशाने पावके न्यसेत् । ४१

गोपुरस्य पुरो विप्र बलिपीठं प्रकल्पयेत्
पचनालयपूर्वे तु कूपं कुर्याद्विचक्षणः । ४२

दक्षिणे चक्रराजन्तु ईशान्ये कोशसग्रहम्
विमानपार्श्वे विप्रेन्द्र दिङ्मूर्तिं परिकल्पयेत् । ४३

वासुदेवादिकं वापि वाराहादिकमेव वा
स्तूपिकात्रितयं वापि पञ्चकं सप्तकन्तु वा । ४४

एकं वापि द्विजश्रेष्ठ धामायामवशेन तु ?
एवं कृत्वा विधानेन प्रतिष्ठां सम्यगाचरेत् । ४५

गर्भन्यासं ततः कृत्वा इष्टकाद्वितयं चरेत्
विमानस्थापनं कुर्यात् पञ्चरात्रेण वर्त्मना । ४६

तरुणालयपूर्वन्तु वेश्म कुर्याद्विचक्षणः
तरुणालयं विना मूलेनाचरेत्तन्त्रवित्तमः ४७

इति श्रीपञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
ग्रामनिर्माणं नाम एकादशोऽध्यायः

---

## अथ द्वादशोऽध्यायः

श्रीभगवान्—

बिम्बमानमथो वक्ष्ये शृणु गुह्यं महामुने
आसनं शयनं वापि यानारूढं स्थितन्तु वा । १

वासुदेवादिकं वापि केशवादीनथापि वा
मत्स्यादीन् वा बिशेषेण यजमानो गुरुस्तथा । २

यजमानोदयाद्वापि भर्गद्वारवशात्तु वा
पाताधिष्टानमानं वा हस्तमानमथापि वा । ३

तालमानमथो वापि यद्वाऽङ्गुलवशात्तु वा
अङ्गुलंत्रितयं प्रोक्तं मात्रं मध्यं च मुष्टिकम । ४

मानप्रमाणमुन्मानपरिमाणोपमानकम्
लंबमानं षडेतानि मानानि कथयाम्यहम्। ५

उत्तुङ्गं मानमित्युक्तमुन्मानं विस्तृतं भवेत्
नाभिमानं प्रमाणं स्यादन्तरंचोपमानकं ? ६

सूत्रं च लम्बमानं स्यादेतै र्मानैस्समायुतम्
षण्मानं च तथैवोक्तमन्यथा दोषकृद्भवेत्। ७

चित्रं वाप्यर्धचित्रं वा चित्राभासमथापि वा
चित्रं सर्वाङ्गदृष्टं स्यादर्धचित्रंतु सार्धकम्। ८

आभासं पटभित्तिस्थं त्रिविधं परिकीर्तितम्
रत्नं लोहञ्च पाषाणं दारु वा मृन्मयन्तु वा। ९

एकबेरं बहुबेरं स्वतन्त्रं परतन्त्रकम्
आश्रितं योगकश्चैव भोगं योगं तथापरम्। १०

ब्रह्मस्थाने स्थितं बेरमेकबेरमुदाहृतम्
दिव्यभागे स्थितं बेरं बहुबेरमिति स्मृतम् ११

स्वतन्त्रं ग्रामतःपूर्वे परतन्त्रं तु पश्चिमम्
आलये भित्तिपार्श्वे तु स्थापितं चाश्रितं भवेत् १२

श्रीभूमिसहितं वापि रहितं योगकं स्मृतम् ?
श्रीकरं भोगमित्युक्तं योगं वश्यकरं भवेत्। १३

अयादिभिस्समोपेतं दशतालेन कारयेत्
तालं शताङ्गुलीकृत्य चतुर्विंशोत्तरं भवेत् । १४

नवतालप्रमाणेन देवीकर्मार्चनादिकम्
षट्कौतुकसमोपेतं बहुबेरमुदाहृतम् । १५

एवबेरं तथा प्रोक्तं शिलार्चेति द्वयं विना
कर्मार्चास्नपनश्चैव स्थापने कर्मकौतुकम् । १६

आत्मार्थं च परार्थं च द्विविधं स्थापनं भवेत्
गृहेषु स्थापितं पूर्वमालये चापरं भवेत् । १७

आत्मार्थं गृहरक्षंस्यादालयं ग्रामरक्षकम्
मुख्यस्थाने स्थितो देवो राजराष्ट्रस्य रक्षकः १८

अन्योन्यसङ्गतौस्यात्तु राष्ट्रक्षोभो यथारुचि
कर्मार्चाचोत्सवार्चा च बल्यर्चा च तथैव च । १९

स्नानतीर्थोभयार्चा च स्वापोत्थानार्चया सह
प्रतिमा षड्विधा प्रोक्ता उत्तमा समुदाहृता । २०

त्रिमिश्र मध्यमा प्रोक्ता एका च चरमा भवेत्
कृष्णराघवसंयुक्तं सिंहवाराहकेन च । २१

सौदर्शन समायुक्तं लक्ष्मीबेरसमन्वितं
[illegible] । २२

यद्वाष्टभुजकं वापि यथारुचि समाचरेत्
शयने द्विभुजं मुख्यं कृष्णो रामो भवेत्तदा । २३

वाराहवामनौ चैव तथा त्रैविक्रमो भवेत्
लक्ष्मीनृसिंहं वाराहं लक्ष्मीनारायणं तु वा । २४

श्रीकरं विजयं प्रोक्तं नगरग्रामपत्तने
एवं बिम्बगणान्कुर्यात् प्रतिष्ठां सम्यगाचरेत् । २५

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
बेरलक्षणन्नाम द्वादशोऽध्यायः

---

## अथ त्रयोदशोऽध्यायः

श्रीभगवान्—

स्थापनं संप्रवक्ष्यामि बिम्बानां मुनिसत्तम
स्थावरं जङ्गमश्चैव द्विविधं बेरमुच्यते । १

अयने चोत्तरं मुख्यं जघन्यं दक्षिणायनम्
जङ्गमन्तु जघन्ये वा मुख्ये वापि समाचरेत् । २

माघे भाद्रपदे मासि प्रतिष्ठां परिवर्जयेत्
गुरुशुक्रास्तमे चैव ग्रहणस्यान्तिके तथा । ३

दुष्टवारे विलग्ने च अशुभर्क्षे तथा तिथौ
वर्जयेद्देवदेवेशस्थापनं देशिकोत्तमः । ४

दैवज्ञेनसमायुक्तं स्थापनं सम्यगाचरेत्
शिल्पशास्त्रानुसारेण शिल्पिना देशिकोत्तमः। ५

यजमानेन सहितः सर्वैः परिकरैः सह
सर्वद्रव्यं समासाद्य पश्चात्कर्म समाचरेत्। ६

कर्मारंभदिनात्पूर्वं सप्तमे पञ्चमेऽहनि
तृतीयेऽहनि वा कुर्यात् अङ्कुरानर्पयेद्बुधः ७

ततः प्रदोषे संप्राप्ते मृत्संग्रहणमाचरेत्
दिशं प्राचीमुदीचीं वा व्रजेत् परिकरैस्सह। ८

उद्यानं वा नदीतीरं प्राकारं तन्मयन्तु वा ?
तद्देशं प्रोक्षयेद्विप्र मन्त्रपूतेन वारिणा। ९

आसने तु समाविश्य प्राणायामं समाचरेत्
न्यासं कृत्वा विशेषेण पुण्याहं वाचयेद्बुधः। १०

महीमभ्यर्च्य मन्त्रेण बलिं दद्यात्समन्ततः
खनित्रं क्षालयेत्तत्र अस्त्रमन्त्रेण देशिकः। ११

वस्त्रदर्भैस्समाच्छाद्य भूसूक्तेन महीं स्पृशेत्
खनित्रेण खनेद्भूमिं प्राङ्मुखः क्रोडविद्यया। १२

वेदैर्विहितमन्त्रेण वास्तुपूर्षं विलिख्य च
पुनरभ्यर्चयेद्धीमान् पात्राण्यादय देशिकः। १३

गच्छेत्परिकरैस्साधं शङ्खकाहलनिस्वनैः
मण्डपं कारयेद्धीमान् प्रपामात्रमथापि वा। १४

वितानाद्यैरलंकृत्य ध्वजतोरणकुम्भकैः
पूर्वपश्चिमदीर्घञ्च दक्षिणोत्तरदीर्घकम्। १५

चतुरश्रं समं वापि तन्मध्ये मण्डलं लिखेत्
इष्टसिद्धिप्रदं वापि चक्राब्जं वापि कारयेत्। १६

पूर्ववत्स्थापयेत्कुम्भं मण्डलस्य तु पश्चिमे
मण्डलेशस्य पूर्वे तु पालिकाक्षेत्रमुच्यते। १७

पश्चिमे चोत्तरे वापि अग्न्यागारं प्रकल्पयेत्
दक्षिणोत्तरे तथा कुर्यात् पालिकां ग्राह्य देशिकः १८

पालिकां घटिकां चैव शरावान्द्वादशान्प्रति ?
बिलान् संपूरयेत्पश्चात् पालाशैः कुशदर्भकैः। १९

चतुर्विंशाङ्गुलोत्सेधं क्षालयेद्देशिकोत्तमः
बन्धयेत्कण्ठदेशे तु दूर्वां बिल्वं च देशिकः। २०

मृदा संपूरयेत्पश्चात् सूत्रपातं समाचरेत्
पालिकास्यानुरूपेण कोष्ठे व्रीहीन्प्रपूरयेत्। २१

तस्योपरि न्यसेत्पत्रं तत्पूर्वे बीजभाजनम्
सोमकुम्भन्तु वा पश्चात् न्यसेत्तन्त्रविचक्षणः। २२

द्वारं कृत्वा विधानेन द्वारपूजां समाचरेत्
कुंभे च मण्डले चैव अग्नौ संपूजयेत्क्रमात्। २३

पालिकादक्षिणे पार्श्वे उत्तराभिमुखः स्थितः
पुण्याहं वाचयेत्पश्चात् ब्राह्मणैः सह देशिकः। २४

पालिका स्वर्चयेद्देवान् ब्रह्माविष्णुशिवात्मकान्
सोमकुम्भं समभ्यर्च्य सोममन्त्रेण होमयेत्। २५

तिलमुद्गयवान्चैव व्रीहिमाषप्रियङ्गुकान्
शिम्बसर्षपगोधूम कुलत्थान् कङ्गुश्यामकान्। २६

बीजानामप्यभावे तु मुद्गमेकं प्रशस्यते
एतत्सङ्गृह्य निक्षिप्य पात्रे क्षीरं विनिक्षिपेत्। २७

स्थापयेदम्बरेणैव पालिकाः परिवेष्टयेत्
सोमकुम्भगतां शक्तिं बीजपात्रे विनिक्षिपेत्। २८

पश्चादोषधिमन्त्रेण अभिमन्त्रणमाचरेत्
पुनस्संपूरयेत्पश्चात् घृतारोपणमाचरेत्। २९

पुनस्संपूजयेत् बीजं बीजावापनमाचरेत्
शङ्खदुन्दुभिनादैश्च गीतमङ्गलवाद्यकैः। ३०

पुनः पूजां प्रकुर्वीत पूर्णाहुत्यवसानकम्
बलिं दद्याद्विशेषेण मण्डपस्य समन्ततः। ३१

सदस्सम्भावयेद्विद्वान् दक्षिणां दापयेद्बुधः
कुम्भमण्डलमभ्यर्च्य पूर्णाहुतिमथाचरेत् । ३२

रक्षां कृत्वा विशेषेण सुगुप्ते स्थापयेद्बुधः
दिने दिने मुनिश्रेष्ठ बलिपूजां समाचरेत् । ३३

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
अङ्कुरार्पणं नाम त्रयोदशोऽध्यायः

## अथ चतुर्दशोऽध्यायः

श्रीभगवान्—

जलवासमथो वक्ष्ये समासान्मुनिपुङ्गव
कर्मारम्भदिनात्पूर्वे तृतीये पञ्चमे ऽपि वा । १

एकाहमथवा कुर्यात् एकरात्रमथापि वा
यामं यामार्धकं वापि जलावासं समाचरेत् । २

कौतुकं पूर्वतः कुर्यात् बेरस्य सकलस्य च
आचार्यस्य विशेषेण ऋत्विजानां तथैव च ३

चित्रयोगे विशेषेण महाबेरैस्तथैव च
छायाधिवासनं कुर्यात् बिम्बाभावे तु दर्पणम् । ४

तदभावे तु कूर्चं स्यात् अलंकृत्य यथाविधि
गमयेत्परिकरैस्सार्धं तीरदेशे विशेषतः । ५

नद्यां वापितटाके वा निर्झरोपान्त एव च
तदभावे विशेषेण कटाहे मणिकेऽपि वा। ६

जलमध्ये प्रपां कृत्वा तीरदेशे तु मण्डपम्
अलंकृत्य वितानाद्यैः कुम्भमण्डलकुण्डकैः। ७

मण्डलं स्वस्तिकं प्रोक्तं कुण्डं पङ्कजमेव च
द्वारादियजनं कृत्वा कुम्भमण्डलकं यजेत्। ८

कुम्भैराराधनं प्रोक्तं मण्डले वासुदेवकम्
अग्नौ वै विष्णुमन्त्रेण पञ्चभूवर्तयेत्ततः। ९

एवमभ्यर्चनं कृत्वा जलमध्ये निवेशयेत्
शयनं कल्पयित्वैवं ब्रह्मकुम्भादिकान् न्यसेत्। १०

न्यासपूर्वं ततः कृत्वा मालान्नेन बलिं क्षिपेत्
पुण्याहवाचनं पूर्वं रक्षां कुर्यात्समन्ततः। ११

नृत्तगीतादिवाद्यैश्च वेदघोषैः प्रणादयेत्
पुराणैःशान्तिमन्त्रैश्च जागरेण नयेन्निशाम्। १२

गृहार्चास्थापने काले सद्योवासं समाचरेत्
ततः प्रभाते विमले तीरमण्डपमानयेत्। १३

स्वस्थाने सन्निवेश्याथ चतुःस्थानं क्रमाद्यजेत्
ब्रह्मकुम्भादिकान् सर्वान् ब्रह्ममूर्धनि सेचयेत्। १४

कलशैः स्नपनं कुर्यात् पञ्चविंशतिभिः क्रमात्
तत्त मन्त्रेण मन्त्रज्ञो मूर्तिमन्त्रेण वाहयेत् । १५

शुद्धस्नानं ततः कृत्वा पुरुषेनाभिषेचयेत्
नीराजनं ततः कृत्वा निवेद्यान्नबलिं क्षिपेत् । १६

गमयेदालये देवं पूर्ववत्परिकल्पयेत्
मण्डपं समलंकृत्य पश्चिमाभिमुखं न्यसेत् । १७

चक्राब्जमण्डलं कृत्वा दर्शनार्थं सकुम्भकम्
नयनोन्मीलनार्थाय सर्वमापादयेद्बुधः । १८

देवस्य पुरतःस्थाने व्रीहितण्डुलपीठके
घृतपात्रं मधु न्यस्य अष्टधान्यं च निक्षिपेत् । १९

गाश्चैव कन्यकाश्चैव विनिवेश्य तदन्तिके
स्वर्णसूचींचतद्विश्च ? रजतेन तथैव च । २०

परिस्तीर्य चतुर्दिक्षु वासुदेवादिकान् यजेत्
कुम्भमण्डलकं पूज्यं पुण्याहमपि वाचयेत् । २१

अर्घ्याद्यैर्देवमभ्यर्च्य घृतपात्रादिकान् न्यसेत्
उन्मील्य दक्षिणं नेत्रं घृतसिक्तशलाकया । २२

चित्रंदेवेति मन्त्रेण तच्चक्षुरिति मन्त्रतः
दर्शयेन्मण्डलं कुम्भं गां च कन्यां तथैव च । २३

अष्टधान्यानि सर्वाणि सुवर्णपलमेव च
नानाविधानि पुष्पाणि फलानि विविधानि च । २४

एतद्द्रव्याणि सर्वाणि आचार्याय प्रदापयेत्
आच्छादनपटश्चैव क्षौमवस्त्रं तथैव च । २५

पुनरभ्यर्चयेद्देवं श्रावयेद्वेदघोषणम्
गीतं नृत्तं च वाद्यं च पुराणं द्राविडं तथा । २६

पुष्पवृष्टिमुपस्सर्वे तुष्टिस्तु पुरुषोत्तमः ?
स्नानपीठे विशेषेण मोदयेद्देशिकोत्तमः । २७

कलशस्थापनं कृत्वा अष्टोत्तरशतं परम्
एकाशीतिघटं वापि चत्वारिंशन्नवोत्तरम् । २८

घृतमुष्णोदकश्चैव रत्नं चैव फलोदकम्
लोहजंमार्जनश्चैव गन्धश्चैवाक्षतोदकम् । २९

यवोदकं तथाचार्घ्यं पाद्यमाचमनीयकम्
पञ्चगव्यं दधिक्षीरं मधु चैव कषायकम् । ३०

त्रिविधे कलशे ब्रह्मन् एतद्द्रव्यं विधीयते
पूर्वादिब्रह्मपर्यन्तमुद्धारक्रम इष्यते । ३१

सूत्रवस्त्रादिभिर्वेष्ट्य कूर्चच....षान्वितम्
तत्तश्चूर्णपटैरक्तं मृदालेपं समाचरेत् । ३२

पञ्चभूतार्चने चैव सन्निधत्ते हरिःस्वयम्
प्रतिष्ठायां विशेषेण पञ्चभूतार्चनं चरेत् । ३३

मृदालेपं जले स्नानं दीपं नीराजनं तथा
गन्धालेपञ्च सेचादि वाद्यवादनमेव च । ३४

मृदालेपक्रमं वक्ष्ये समासादवधारय
नदीतटाकवल्मीकपर्वतक्षेत्रमृत्तिकाः । ३५

गजसूकरगण्डस्थं गोवृषशृङ्गसंस्थितम्
तीर्थसिन्धुमृदं चैव एतद्द्वादशकं स्मृतम् । ३६

ताम्रपात्रे तथाग्राह्यं पृथक्पात्रे विनिक्षिपेत्
शरावं कलशं वापि किञ्चिदुक्तमृदाश्रितम् ॥ ३७

धान्यराशौ प्रतिष्ठाप्य कोष्ठद्वादशकं भवेत्
पुण्याहं वाचयित्वा तु मृदानभ्यर्च्य साधकः । ३८

द्वादशाक्षरमन्त्रेण मृदालेपं समाचरेत्
पूजयेत्संपुटीकृत्य उपस्नानसमन्वितम् । ३९

कलशस्नपनं कुर्यात् द्वादशाक्षरमन्त्रतः
विष्णुसूक्तेन वा विप्र पुरुषसूक्तमथापि वा । ४०

अन्तरान्तरयोगेन उपस्नानादिनार्चयेत्
चूर्णस्नानं ततः कुर्यात् शुद्धस्नानं तथैव च । ४१

सहस्रधारया स्नानं कुर्यान्नीराजनं तथा
घटदीपद्वादशकैः प्रतिष्ठाप्य पुरःस्थले । ४२

सूत्रमल्लकसंयुक्तं वन्दिवादसमन्वितम्
नीराजयेद्घटं विप्र पूजयेत्पूजयान्वितम् । ४३

नीराजनविधानेन अग्निपूजनमिष्यते
अग्निपूजाविहीने तु प्रतिष्ठा निष्फला भवेत् । ४४

मारुतप्रीणनार्थाय गन्धस्नानं समाचरेत्
चन्दनं कुङ्कुमञ्चैव कर्पूरमगरुं तथा । ४५

उशीरं कोष्ठकञ्चैव कचोरं रजनी तथा
एलालवङ्गकञ्चैव तक्कोलं मुरमेव च । ४६

एतानि द्वादशोक्तानि मन्त्रेऽस्मिन् परमेष्ठिना
पृथक् पात्रे निवेश्याच्यं स्नापयेद्द्वादशार्णकैः । ४७

पूजया संपुटं कुर्यात् साधकस्तन्त्रपारगः
आकाशप्रीणनार्थाय वेदवाद्यादिना चरेत् । ४८

चतुर्वेदादिघोषञ्च पुराणं गीतमङ्गलम्
गाथापद्यं तथा मिश्रं प्रत्यङ्गागमनं तथा । ४९

श्रावयेत्सन्निधौ विप्र देवदेवस्याशार्ङ्गिणः
अर्घ्याद्यैः पूजयेद्देवं प्रीतिशब्दमनन्तरम् । ५०

अलङ्कृत्य यथान्यायं शयनं परिकल्पयेत् ॥

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
जलाधिवासो नाम चतुर्दशोऽध्यायः

---

## अथ पञ्चदशोऽध्यायः

श्रीभगवान्—

शयनं संप्रवक्ष्यामि स्थापनं तदनन्तरम्
कल्पयेन्मण्डपं पूर्वं ध्वजतोरणकुम्भकैः । १

वितानैः पूर्वोक्तकुम्भै श्चिरं भागै र्मनोरमैः
फलै र्नानाविधैश्चैव पुष्पमाल्यैश्च शोभितम् । २

दर्भमाल्यैः परिक्षिप्तं मुक्तादामैरलंकृतम्
तस्मिन्मण्डपमध्ये तु वेदिं कुर्याद्विचक्षणः । ३

वेदिकातालभूमौ तु शयनं परिकल्पयेत्
पञ्चभारप्रमाणेन व्रीहिणा परिपूरयेत् । ४

तदर्धं तण्डुलश्चैव तदर्धं तिलमेव च
प्रतिवस्त्रं तथास्तीर्य तदूर्ध्वे कम्बलं न्यसेत् । ५

तदूर्ध्वे तूलिकां न्यस्य व्याघ्रचर्म तथोपरि
चित्रवस्त्रं तदूर्ध्वे तु प्रच्छादनपटं तथा । ६

मृद्वास्तरणसंयुक्त मुपधानत्रयान्वितम्
एवं शयनकं कृत्वा शास्त्रदृष्टेन वर्त्मना । ७

तस्य दक्षिणपार्श्वे तु मण्डलं परिकल्पयेत्
चक्राब्जं बहुपद्मं वा इष्टसिद्धिमथापि वा । ८

शयनस्योत्तरे पार्श्वे कुम्भवेदिं प्रकल्पयेत्
कुम्भन्तु पूर्ववत्कृत्वा कुण्डाष्टौ संप्रकल्पयेत् । ९

शङ्खं चक्रं गदां चैव पद्मवेदिं चतुष्टये
अश्रंकोणं षडश्रं वा पञ्चाश्रं विदिशःक्रमात् । १०

मूलबेरप्रतिष्ठायामेष एव विधिर्भवेत्
नारसिंहप्रतिष्ठायां वाराहस्य विशेषतः । ११

अष्टवह्नौ विना विप्र अन्यथा दोषकृद्भवेत्
चतुर्दिक्षु विशेषेण वेदान् संस्थापयेन्मुखम् । १२

ऋग्वेदं पूर्वदिग्भागे यजुर्वेदं तु दक्षिणे
पश्चिमे सामवेदन्तु अथर्वञ्चोत्तरे तथा । १३

एवं गुरुविधानेन पुण्याहं वाचयेद्बुधः
शयनन्तु समभ्यर्च्य शयने सन्निवेशयेत् । १४

द्वारादि यजनं कुर्यात् कुम्भे संपूजयेद्धरिम्
मण्डले वासुदेवन्तु बिम्बे तन्मूर्तिमर्चयेत् । १५

शयने शाययेद्देवं क्षौमैराच्छादयेत्परम्
होमकर्म ततः कुर्यात् प्रत्येकमृत्विजैर्भवेत् । १६

स्वयमेवह्यलंकुर्यात् चतुर्भिर्वापि कारयेत्
ऋत्विजानामप्यभावे तु आचार्याद्युपकारयेत् । १७

अष्टोत्तरशतं होमं तदर्धं मध्यमं भवेत्
अश्वत्थोदुंबरश्चैव न्यग्रोधः प्लक्ष एव च । १८

पलाशः खदिरश्चैव शम्यपामार्ग एव च
एतेषामप्यलाभे यु पालाशसमिधं हुवेत् । १९

समिदाज्येन चरुणा तिलैराज्यैश्च होमयेत्
होमान्ते तु विशेषेण चतुरन्नं निवेदयेत् । २०

पायसं चैव मुद्गान्नं कृसरं गुळमेव च
शुद्धान्नश्चैव माषान्नं हरिद्रान्नं तथैव च । २१

शिम्बान्नश्च विशेषेण होमं स्यादष्टकुण्डके
न्यासहोमं ततःकृत्वा संहृतिन्यासमाचरेत् । २२

शोषणादित्रयं कृत्वा सृष्टिन्यासं समाचरेत
पञ्चोपनिषदै मन्त्रैः सृष्टिसंहारकं चरेत् । २३

मन्त्रन्यासं ततः कृत्वा तत्त्वन्यासं समाचरेत्
तन्त्रन्यासं ततः कृत्वा होमं कुर्यात्पृथक् पृथक् । २४

एवं कृत्वा विधानेन कवाटं चापि बन्धयेत्
त्रिरात्रं बन्धयित्वैवं बहुबेरेन ब-धयेत् । ४३

चतुर्थेऽहनि संप्राप्ते चतुःस्थानार्चनं चरेत्
आचार्यं पूजयेत्पश्चात् रत्नहेमाङ्गुलीयकैः । ४४

गोभूहिरण्यवस्त्राद्यैः कन्यादानैर्विशेषतः
ततः प्रभृति विप्रेन्द्र नित्यपूजां समाचरेत् । ४५

उत्सवं कारयेदेव मन्ते पूजां समाचरेत् ॥

इति श्रीपञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
प्रतिष्ठाविधानं नाम पञ्चदशोऽध्यायः

---

## अथ षोडशोऽध्यायः

श्रीभगवान्—

सदाचारमथो वक्ष्ये सावधानेन तच्छृणु
तस्य विशेषेण सदाचारं ब्रवीमिते । १

ब्राह्मे मुहूर्ते चोत्थाय भगवन्नामकीर्तनम्
स्तोत्रेण तोषयेद्विद्वान् गुरुं संस्मृत्य साधकः । २

वासुदेवाय देवाय समग्रगुणमूर्तये
सङ्कर्षण नमस्तेऽस्तु विश्वपावनमूर्तये । ३

अनिरुद्ध नमस्तेऽस्तु जगत्कारणमूर्तये
केशवाय नमस्तेऽस्तु ततो नारायणाय ते । ४

माधवाय नमस्तुभ्यं गोविन्दाय नमो नमः
विश्वात्मने नमस्तुभ्यं नमोस्तु मधुसूदन । ५

त्रिविक्रम नमस्तेऽस्तु वामनाय नमो नमः
श्रीधराय नमस्तेऽस्तु हृषीकेशाय ते नमः । ६

नमस्ते पद्मनाभाय नमो दामोदराय च
नमस्ते मत्स्यरूपाय नमस्ते कूर्ममूर्तये । ७

वाराहाय नमस्तेऽस्तु नारसिंहाय ते नमः ८

वामनाय नमस्तेऽस्तु नमो रामत्रयाय च
गोविन्दाय नमस्तेऽस्तु हयग्रीवाय ते नमः । ९

एवं स्तुत्वा विधानेन तीरदेशं समाश्रयेत्
दर्भवस्त्रं निधायाथ जलाद्दूराद्बहिश्चरेत् । १०

कर्णस्थब्रह्मसूत्रं च दिवा चोदङ्मुखश्चरेत्
रात्रौ चेद्दक्षिणावक्त्रं तृणं भूमौ विनिक्षिपेत् । ११

लेपयेद्दक्षिणं हस्तं काष्ठपर्णतृणादिभिः
गृहीत्वा वामहस्तेन शेफाग्रं वाग्यतश्चरेत् । १२

तीर्थं गत्वा शुचौ देशे मृदमादाय मन्त्रतः
उद्धृताभिर्विशेषेण मृद्भिः प्रक्षालनं चरेत् । १२

सप्तभिर्गुददेशश्च शिश्नश्च त्रिभिराचरेत्
अन्तरान्तरयोगेन हस्तप्रक्षालनं चरेत् १३

पञ्चभिः पादशुद्धिं च आचामं तु समाचरेत्
त्रिःपिबेत् द्विर्मृजेच्चैवं दशाङ्गानि च संस्पृशेत् । १४

अङ्गुलीभि विशेषेण चक्षुराद्यैस्तु संस्पृशेत्
मृदालेपं ततः कृत्वा मृदा दिग्बन्धमाचरेत् । १५

विष्णुगायत्रिया चैव अवगाहनमाचरेत्
आचामं तु ततः कृत्वा तीरदेशं समाविशेत् । १६

आपोहिष्ठादिभि मन्त्रैः प्रोक्षयेत्स्वशिरोपरि
उदकाञ्जलिं ततः कृत्वा प्रादक्षिण्यं समाचरेत् । १७

तर्पयित्वा विशेषेण आचामं तु समाचरेत्
वस्त्रन्निष्पीडयेत्पश्चात् सावित्रीन्तु ततो जपेत् । १८

उपस्थानं ततः कृत्वास्वगृहं संप्रवेशयेत्
पादप्रक्षालनं कृत्वा आचामेत्पूर्ववद्बुधः । १९

अग्निं समिन्धयेत्पश्चात् नित्यहोममथाचरेत्
दिवाकरोदयात्पूर्वं नित्यकर्म समाप्य च । २०

देवालयं प्रविश्याथ प्रादक्षिण्यद्वयं चरेत्
पूर्ववच्छुद्धिराचामं कृत्वा पूजां समाचरेत्। २१

द्वारदेशे तु संप्राप्ते षडङ्गन्यासमाचरेत्
तालत्रयं ततः कृत्वा प्रविशेद्दक्षिणाङ्घ्रिणा। २२

देवस्य दक्षिणे पार्श्वे आसने तु समाविशेत्
उदक्पूर्ववलने दक्षिणाभिमुखश्चरेत्। २३

पश्चिमद्वारके विप्र तथा कुर्याद्विचक्षणः
अङ्गन्यासं ततः कृत्वा छोटिकादर्शनं चरेत्। २४

प्राणायामत्रयं कृत्वा रेचकादित्रयेण च
पञ्चोपनिषदैर्मन्त्रैः संहृतिन्यासमाचरेत्। २५

जीवात्मानं समारोप्य परस्मिन् ब्रह्मणि ध्रुवे
शोषणादित्रयं कृत्वा अन्तरस्थो विचक्षणः। २६

दिव्यस्थानं यथा स्थाप्य सृष्टिन्यासं समाचरेत्
मातृकान्यसनं कृत्वा तत्त्वन्यासं समाचरेत्। २७

महाभूतादीनां पञ्चतन्मात्राणां तथैव च
न्यासक्रमे विजानीयात् मनोबुध्यादिपञ्चकम्। २८

मूलमन्त्राक्षरन्यासं षडङ्गं द्वादशन्तु वा
मूर्धादिपादपर्यन्तं सृष्टिन्यासं प्रकीर्तितम्। २९

नाभ्यादि हृदयान्तन्तु स्थितिन्यासं प्रकीर्तितम्
पादादि च शिरोन्तन्तु संहृतिन्यासमुच्यते । ३०
ब्रह्मचारी गृहस्थश्च यतिश्चैव यथाक्रमम् ?
मूर्धा चक्षुर्मुखश्चैव नाभि गुह्यं च पादुकम् । ३१
पृथिव्यादीनां भूतानां स्थानं पादं शिरोऽपि वा
पञ्चस्थानन्तु चान्येषां स्थानमेतदुदाहृतम् । ३२
करन्यासं ततः कृत्वा सृष्टिसंहारपालनैः
दक्षिणादि तु वामान्तं सृष्टिन्यासं प्रकीर्तितम् । ३३
विपरीतेन योगेन विपरीतमुदाहृतम्
तर्जन्यादि कनिष्ठान्तं सृष्टिन्यासं प्रकीर्तितम् । ३४
करन्यासं तु पूर्वं स्यात् देहन्यासं तु पश्चिमम्
एवं न्यासं क्रमात्कृत्वा मानसाराधनं चरेत् । ३५
ध्यानार्घ्यगन्धपुष्पाद्यै रुपचारै स्समर्चयेत्
मानसाराधानं श्रेष्ठं बाह्यपूजाऽवरा विदुः । ३६
बाह्यन्तु नाशमायाति तस्मान्मानसिकं परम्
आत्मार्थे तु तथा कुर्यात् परार्थे संप्रपूजयेत् । ३७
साधकः सर्वशास्त्रज्ञः नाविष्णु र्विष्णुमर्चयेत्
देवोऽहं भावयेद्विद्वान् पञ्चरात्रविशारदः । ३८

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
सदाचारविधिर्नाम षोडशोऽध्यायः

## अथ सप्तदशोऽध्यायः

आराधनविधिं वक्ष्ये अवधारय सांप्रतम्

भृगुः—

कैर्द्रव्यैः पूजयेद्देवमुपचारैश्च कैः प्रभो । १

श्रीभगवान्—

दीक्षितै स्साधकै श्चैव तथैव परिचारकैः
स्वादूदकैश्च पुष्पैश्च गन्धै र्नानाविधैरपि । २

धूपै र्गुग्गुलुमिश्रैश्च दीपै र्वर्त्तिसमन्वितैः
वस्त्रै श्चैवोपवीतैश्च माल्यै र्नानाविधैरपि । ३

गीतनृत्तैश्च वाद्यैश्च स्तोत्रैश्चैव प्रदक्षिणैः
वाहनै श्चामरैश्चैव शङ्खकाहलनादकैः । ४

मात्राभि स्तालवृन्तैश्च स्नानैश्च कलशोदकैः
नीराजनै र्दीपयुक्तै रर्घ्यपाद्यादिकै स्तथा । ५

कर्पूरैश्चैव ताम्बूलैः गोदानै श्शान्तिकुम्भकैः
भक्ष्यै र्भोज्यैस्तथा पेयै र्लेह्यैश्चोष्यै र्महादिकैः । ६

जपैः प्रणामै र्दानैश्च होमैश्चैव विशेषतः
बलिदानैरुत्सवैश्च बिम्बै र्नानाविधैरपि । ७

प्रासादमण्डपैश्चैव परिवारसमन्वितैः
अनन्तगरुडाद्यैश्च उत्सवाद्यै विशेषतः । ८

मण्डलाराधनैश्चैव तथा वै कुम्भपूजनैः
वह्निसंपूजनै श्चैव मासपूजासमन्वितैः । ९

पवित्रारोहणेनाथ पत्रपुष्पोत्सवेन च
दमनारोहणै श्चैव तथा चैव फलोत्सवैः । १०

प्रायश्चित्तविधानैश्च तथा विष्ण्वादिपूजनैः
श्रावण्यामर्चनै श्चैव पौर्णमास्यद्वयार्चनैः ११

श्रीजयन्त्युत्सवै श्चैव तथा कृत्तिकपूजनैः
आग्रायणै विशेषेण तथाचाध्ययनोत्सवैः । १२

वसन्तोत्सवै विंशेषै स्तथा चैव ज त्सवैः ?
तुलस्याराधनैश्चैव तथा पत्रैश्च चम्पकैः । १३

एतै स्संपूजयेद्देव मन्यथा दोषकृद्भवेत्
तस्मात्सर्वप्रयत्नेन एतै द्रव्यैः सुपूजयेत् । १४

नित्यैर्नैमित्तिकैश्चैव तथा काम्यै र्महोत्सवैः
एतत्कर्म विना चेत्तु राजराष्ट्रभयं भवेत् । १५

महद्दोषमवाप्नोति सर्वसंहारकारणम्
उपचारानथो वक्ष्ये समासादवधारय । १६

ज्ञानयोगं कर्मयोगं द्विविधं तदुपायकम्
कर्मयोगाच्च भगवन् ज्ञानयोगं प्रजायते । १७

कर्मयोगविशेषेण केशवाराधनं परम्
केशवाराधनं चैव राजराष्ट्रसुखावहम् । १८

सर्वदुःखोपशमनं सर्वज्ञानफलप्रदम्
भगवद्ज्ञानफलदं विष्णुप्रीतिकरं शुभम् । १९

देवदेवप्रसादेन सर्वदुःखक्षयावहम्
तस्मात्सर्वप्रयत्नेन केशवाराधनं चरेत् । २०

पञ्चशुद्धिविधिं कुर्यात् प्रथमं मुनिसत्तम
भूतशुद्धि द्रव्यशुद्धिः स्थानशुद्धि स्तथैव च २१

पात्रशुद्धि स्तथा पश्चात् बिम्बशुद्धिस्तु पञ्चमम
स्नानमाचमनं चैव देहशुद्धि र्विशिष्यते । २२

सत्येन ध्यानयोगेन मनश्शुद्धिरिहोच्यते
सत्यं भूतहितं प्रोक्तं ध्यानं वै विष्णुचिन्तनम् । २३

मार्जनालेपने चैव स्थानशुद्धि र्विधीयते
दहनाप्यायने चैव क्षालनात् प्रोक्षणादपि । २४

द्रव्यशुद्धिं विजानीयात् साधकः परमार्थवित्
पात्राणि पूततोयेन शुद्धं प्रक्षालयेषु वै । २५

तिन्त्रिणी सिकताम्भोभिः बिम्बशुद्धिः प्रजायते
एवं शुद्धिं क्रमात्कृत्वा भद्रपीठं तु विन्यसेत् । २६

वस्त्रे तु फलकेवापि न्यसेदर्ध्यादि पात्रकान्
अर्घ्यं पाद्यं तथाचामं स्नानीयं शुद्धपात्रकम् । २७

अग्न्यादिब्रह्मपर्यन्तमाधारोपरि विन्यसेत्
अर्घ्ये गन्धं फलं चैव पाद्ये दूर्वां तिलं तथा । २८

एलालवङ्गमाचामे स्नानीये चन्दनं परम्
शुद्धतोये विशेषेण तथैव परिपूजनम् । २९

श्रीरर्घ्यस्य भवेद्देवी वागीशीत्वाचमस्य च
पाद्ये च पितरं देवं स्नानीये वरुणं तथा । ३०

शुद्धोदके च शान्तिं च पञ्च पात्रस्यदेवताः
दहनाप्यायनेचैव सौरभेयीप्रदर्शनम् । ३१

छोटिकादर्शनं कुर्यात् गन्धपुष्पादिधूपकैः
पूजयेत् सर्वपात्राणि पञ्चोपनिषदैः क्रमात् । ३२

उदभाण्डं समभ्यर्च्य गन्धपुष्पै स्तथैव च
द्वारपूजां ततः कुर्यात् द्वारस्थाने विशेषतः । ३३

आत्मानमर्चयित्वा तु गुरुपंक्तिं प्रपूजयेत्
गुरुं परं गुरुं चैव तथा सिद्धगण यजेत् । ३४

द्वारपूजां पुरा विप्र प्रासादपुरुषं यजेत्
पीठस्थदेवतान् सर्वान् गन्धपुष्पादिभि र्यजेत् । ३५

धर्मादिचतुरश्चैव अधर्मादींस्तथैव च
वेदादींश्चतुरश्चैव युगादींश्चतुरस्तथा । ३६

गुणत्रयं तदूर्ध्वे तु तदूर्ध्वे मण्डलत्रयम्
आधारं प्रथमं कूर्मं कालाग्निं तदनन्तरम् । ३७

अनन्तं मणिकं चैव भद्रपीठं च पङ्कजम्
स्थानमापूजयेत् सर्वान् परिवारांस्तथैव च । ३८

वासुदेवादिकांश्चैव तथा शङ्खादिकान् परम्
कुमुदादि गणान् सर्वान् तथा इन्द्रादिपालकान् । ३९

विष्वक्सेनगणान् सर्वांश्चण्डादिकपुरस्सरम्
एतान् संपूजयेदर्घ्यगन्धपुष्पादिधूपकैः । ४०

आवाहनं ततः कुर्यात् मूलाद्वै कर्मकौतुकम्
अनेकैरुपचारैर्वा अष्टोत्तरशतैस्तु वा । ४१

चतुष्षष्टिक्रमं वापि द्वात्रिंशक्रममेव च
परार्थयजने विप्र एतन्न्यूनं न कारयेत् । ४२

आत्मार्थे षोडशं प्रोक्तं द्वात्रिंशत्क्रममेव वा
आवाहनं नमस्कारः प्रत्युत्थानमनन्तरम् । ४३

पुष्पाञ्जलिः स्वागतोक्तिरासनं पादपीठिका
अर्घ्यं पाद्यं तथाचामं तत्क्रमो वक्ष्यतेऽधुना । ४४

अर्घ्यदाने विशेषेण घण्टां शङ्खं निनादयेत्
आवाहने तु विप्रेन्द्र निगमं वाद्यमाचरेत् । ४५

शङ्खद्वयं काहलञ्च भृङ्गनादं तथैव च
पाद्यदाने तु विप्रेन्द्र द्विर्दद्याच्च पदाम्बुजे । ४६

वस्त्रेण मार्जनं कृत्वा चन्दनालेपनं चरेत्
पुष्पं पृथक् पृथक् दद्यात् सुगन्धं पाद्यमेव वा । ४७

पाद्यदाने तु शङ्खंस्यादाचामं हीनशङ्खकम्
आचामं तु त्रिर्दद्यात्तु द्विरुन्मृज्य च संस्पृशेत् । ४८

नेत्रं नासां तथा श्रोत्रमंसयोर्द्वितयं स्पृशेत्
अर्घ्यं शिरसि विन्यस्य पाद्यं पादाम्बुजद्वये । ४९

आचामं हस्तके दद्याच्चक्षुरादेस्तु तत्र तु
उन्मृजाकरणे विप्र तिर्यङ्मूर्ध्नि परामृशेत् । ५०

गन्धानुलेपनं देयं पुष्पं शिरसि अंसयोः
मुक्तपुष्पञ्च पत्रं च त्रिर्दद्याद्द्वे पदाम्बुजे । ५१

धूपदानं मधुपर्कं ताम्बूलं गन्धभावितम्
मुद्रमात्रप्रदानं च पादुकं स्नानविष्टरम् । २२

मधुपर्कप्रदाने तु आचामं केवलं ददेत्
आसनेषु च सर्वेषु वस्त्रताम्बूलदानके । ५३

पादप्रक्षालने चैव भोजनान्ते विशेषतः
आचामं कारयेन्नित्यं वस्त्रमञ्जनलेपनम् । ५४

स्नानासनं निवेद्याथ पादप्रक्षालनं चरेत्
आचामं स्नानशाटीं च पुनराचाममेव च । ५५

दन्तधावनकं चैव जिह्वानिर्लेखनं तथा
गण्डूषाचमनं चैव वस्त्रमाल्यानुलेपनम् । ५६

मुखवासं च ताम्बूलं तथा दर्पणपूर्वकम्
स्कन्धशाटीं तथा तैलं सुगन्धं कुसुमावृतम् । ५७

नेत्रवस्त्रावबद्धं च अपूपानि निवेदयेत्
वीजयेत्तालवृन्तेन अभ्यङ्गं सम्यगाचरेत् । ५८

अपूपादिनिवेद्यान्ते आचामं नागवल्लिकां
कदलीमुष्णोकं चैव मुखालेपं समाचरेत् । ५९

चन्दनं मुखलेपार्थं मुष्टिकर्पूरभावितम्
तैलं बहुसुगन्धं च उदकं स्वादु शीतलम् । ६०

शुद्धस्नानं ततः कृत्वा धौतवस्त्रं प्रदापयेत्
अर्घ्यं च रजनीस्नानं पुनः स्नानं तथैव च । ६१

धौतवस्त्रप्रदानं च पात्राणां च प्रकल्पनम्
पूजनं पूर्ववत् कुर्यादर्घ्यदानं समाचरेत् । ६२

पाद्यमाचमनीयं च गन्धालेपनमाचरेत्
पवित्रं चोपवीतं च उत्तरासङ्गमेव च । ६३

पुष्पमाला धूपदानं दीपं वेदैश्च पाठनम्
नानाविधानि स्तोत्राणि गद्यपद्यगतानि च । ६४

प्राकृतं मङ्गलंचैव पैशाचं मङ्गलं तथा
गीतमङ्गलकं चैव नृत्तं वाद्यं तथैव च । ६५

सहस्रधारया स्नानं कलशस्नानपूर्वकम्
द्वादशं नवकं वापि यथा वित्तानुसारतः । ६६

घृतं पाद्यं दधि चैव अर्घ्यं क्षीरमतः परम्
आचामं गन्धतोयं च पञ्चगव्यं कषायकम् । ६७

यथा नवघटे प्रोक्तं द्वादशे वाधिकं शृणु
रत्नं लोहं फलं पुष्पं मध्ये च चतुरःक्रमात् । ६८

द्रव्याणामप्यलाभे तु तद्वर्गैकं प्रशस्यते
नित्ये च स्नपने चैव कौतुकेनाङ्कुरार्पणम् । ६९

निशाचूर्णैः स्नपनं नेष्यते मण्टपस्थले
अन्तरान्तरयोगेन अर्घ्यदानं समाचरेत् । ७०

सहस्रधारया स्नान मनुवाकत्रयं भवेत्
विष्णुसूक्ताभिषेकं च श्रीसूक्तेन श्रियं तथा । ७१

भूसूक्तेन भुवं प्रोक्तं स्नपने प्रत्यृचं भवेत्
अष्टाक्षरेण वा सर्वं द्वादशाक्षरेण भवेत् । ७२

स्नानान्ते भोजनान्ते च अलङ्कारासनान्तके
सायाह्ने तु विशेषेण नीराजनमथाचरेत् । ७३

भ्रामयेद्घटदीपेन एकधा वा द्विधा त्रिधा
बहुदीपसमायुक्तं नीराजनपरिस्थितम् । ७४

द्वयं चतुर्थं षट्कं वा अष्टकं दशकं तु वा
द्वादशं षोडशं वापि विंशं त्रिंशमथापि वा । ७५

घटदीपं विशेषेण दीक्षितेन परिष्कृतम्
अर्चयेदर्घ्यपुष्पाद्यैर्देवं तुष्ट्वा यथाक्रमम् । ७६

भ्रामयेद्देवदेवेशे आपादतलमस्तकम्
धौतवस्त्रद्वयेनैव शिरोगात्रं प्रमार्जयेत् । ७७

अधरोत्तरवस्त्रं च शिरोवेष्टनमाचरेत्
गीतवाद्यादिसंयुक्तमलंकारासनं नयेत् । ७८

अलंकारैरलंकृत्य आसने च विशेषतः
... ...., .... समाविशेत् ? । ७९

अर्घ्यादिकल्पनं कुर्यात् पूर्ववन्मंत्रवित्तम
द्वारार्चनं ततः कुर्यात् परिवारार्चनं तथा। ८०

विष्वक्सेनार्चनं चैव पीठदेवार्चनं तथा
अर्घ्यादिकं तथा कुर्यात् पाद्यमाचमनं तथा। ८१

प्रतिग्रहत्रयं प्रोक्तं समाराधनकर्मणि
कर्पूररजसायुक्तं शरीरस्नानमाचरेत्। ८२

मृगमदं शिरस्नानं प्रोक्तं वै विष्णुना पुरा
गात्रानुलेपनं कुर्यात् तथावै मिश्रचन्दनैः। ८३

बाहुमूलद्वये विप्र कृत्रिमालेपनं भवेत्
गन्धै र्नानाविधैः पुष्पै श्शिरोवेष्टनमाचरेत्। ८४

मल्लदण्डसमाकारं कर्णिकाकारमेव च
शिरोमाल्यैरलंकृत्य बाहुमूले प्रलम्बयेत्। ८५

उपवीतं प्रदद्यात्तु भूषणानि तथैव च
ललाटे तिलकं कृत्वा तथा चोर्ध्वं च पुण्ड्रकम्। ८६

ताम्बूलं दर्पणं चैव धूपं दीपं तथैव च
वाहनं चामरं छत्रं ध्वजं मङ्गलकीर्तनम्। ८७

वेदघोषं पुराणञ्च शङ्खकाहलनादनम्
गीतं नृत्तं तथा वाद्यं मात्रादानपुरस्सरम्। ८८

प्रदक्षिणं नमस्कार स्तथा नीराजनं भवेत्
भोज्यासने तु देवेशं त्रिभि र्भागवतैस्सह । ८९

पाद्यमर्घ्यं तथाचामं मधुपर्कमनन्तरम्
आचामं चैव ताम्बूलं तिलगोदानमेव च । ९०

अङ्गशाटीं तथा दद्यादर्हणं भोजनं तथा
पायसं चैव मुद्गान्नं शुद्धान्नं पायसैर्युतं । ९१

पानकं चैव पानीयं गण्डूषाचमनं तथा
वस्त्रेण मार्जनं कृत्वा गन्धालेपनमाचरेत् । ९२

पाञ्चरात्रान् समाहूय अर्घ्याद्यैस्संप्रपूजयेत्
तंत्रदानं ततः कुर्यान्मधुपर्कपुरस्सरम् । ९३

मात्रादानं ततःकृत्वा ताम्बूलं च निवेदयेत्
अक्षमालां समभ्यर्च्य जपकर्म समाचरेत् । ९४

महानसं प्रविश्याथ होमकर्म समाचरेत्
इति संक्षेपतः प्रोक्तं समाराधनमुत्तमम् । ९५

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
समाराधनविधिर्नाम सप्तदशोऽध्यायः

## अथ अष्टादशोऽध्यायः

श्रीभगवान्—

अग्निकार्यमथो वक्ष्ये सङ्ग्रहान्मुनिसत्तम
पचनालयमासाद्य द्वारमभ्यर्च्य साधकः ।' १

चुल्ल्यां दक्षिणतो विप्र होमकुण्डं समाचरेत्
चतुरश्रं समंचैव योनिनाभिसमन्वितम् । २

मेखलात्रयसंयुक्तं पीठकादिसमन्वितम्
कुण्डस्य दक्षिणे पार्श्वे आसने तु समाविशेत् । ३

श्रीकरं विस्तरे पार्श्वे उल्लेखनमथाचरेत्
पूर्वाग्रे त्रिभिरेखैश्च उत्तराग्रे तथैव च । ४

पूर्वाग्रं याम्यसौम्यं स्यादुत्तराग्रं तु पश्चिमम्
अग्निं समिन्धयेत्पश्चात् प्राणायाममथाचरेत् । ५

दर्भैः परिस्तरेत्तत्र वासुदेवादिमन्त्रतः
कुण्डस्योत्तरपार्श्वे तु दर्भैस्तत्र परिस्तरेत् । ६

पात्राणां सादनं कुर्याद्द्वितयुग्मेन साधकः
आज्यपात्रं तथा दर्वी प्रोक्षणीं प्रणीतामपि । ७

इध्मं दर्वीं विशेषेण साधयेन्मन्त्रवित्तमः
प्रोक्षणीं पुरतो न्यस्य पवित्रं तत्र निक्षिपेत् । ८

पूरयेज्जलपात्रेण तत्रोत्प्लावनमाचरेत्
तज्जलैः प्रोक्षयेत्पात्राण्युत्तानं सम्यगाचरेत्। ९

पुनश्च प्रोक्षणं कुर्यात् प्रणीतां पुरतो न्यसेत्
उन्प्लावनं पूर्ववत्कृत्वा दर्भेण च विधानतः। १०

ललाटसममुद्धृत्य स्थापयेन्मेखलोपरि
अग्नेरुत्तरपार्श्वे तु ब्रह्मकूर्चं विनिक्षिपेत्। ११

ब्रह्माणमर्चयेद्विद्वान् अर्घ्यगन्धादिभिः क्रमात्
आज्यपात्रं समादाय आज्यं निक्षिप्य साधकः। १२

अग्नेरुत्तरपार्श्वे तु अङ्गारान्विभजेत्ततः
विभज्योर्ध्वे प्रतिष्ठाप्य दर्भानादीपयेत्ततः। १३

दर्भाग्रौ तत्र निक्षिप्य पुनरादीप्य दर्शयेत्
आज्यपात्रं समुद्धृत्य अङ्गारान् सहयोजयेत्। १४

आदाय पुरतो न्यस्य उत्प्लावनं सम्यगाचरेत्
कूर्चमग्रे विनिक्षिप्य सौरभेयीं प्रदर्शयेत्। १५

दर्वीमादाय सव्येन अपसव्येन दर्भकम्
त्रिधा सन्तापयेद्विद्वान् दर्भानग्नौ विनिक्षिपेत्। १६

परिधिं विन्यसेद्विप्र आज्यं दक्षिणमुत्तरे
चनं क्रमात् कृत्वा ऊर्ध्वं विन्यस्य कोणयोः। १७

अनुयाजन्न्यसेद्विद्वान् प्रणीतां मुखमध्यमे
इध्महोमं ततः कृत्वा आघारं जुहुयात्ततः । १८

अनिलाद्यग्निपर्यन्तमाघारं प्रथमं हुवेत्
नैर्ऋतादीश पर्यन्तमाघारं तु द्वितीयकम् । १९

अग्नेस्सव्यापसव्ये तु अग्नेस्सोमेन हूयते
देर्वी देवं ततो दद्यादृतुसङ्गमनं परम् । २०

उभाभ्यामपि सञ्जातमग्निं च परिचिन्तयेत्
होमान्तादिक्रियां ? कृत्वा आज्येन द्विजसत्तम । २१

समिदाज्येन चरुणा प्रत्येकं षोडशाहुतीः
जिह्वाहोमं ततः कृत्वा ज्ञात्वा शक्तिं च होमयेत् । २२

नित्यहोमं विशेषेण क्रमाद्वक्ष्ये विशेषतः
अग्निं समिन्धयेत्पश्चात् प्राणायामं च कारयेत् । २३

परिषेचनं क्रमात्कृत्वा अग्निं ध्यात्वा समर्चयेत्
समिदाज्येन चरुणा यद्वा आज्येन वा भवेत् । २४

मूलमन्त्रत्रयेणैव त्रिर्द्रव्यैः परिहोमयेत्
द्वादशाष्टाहुतीर्वापि बलिं दद्यात्समन्ततः । २५

आत्मनः पुरतश्चैव पितॄणां पिण्डमाचरेत्
दर्भैः परिस्तरेत्पश्चात् कबलत्रयमाचरेत् । २६

पितृमातृगणाभ्यां वै विश्वेदेवा अनन्तरम्
कबलत्रितयं दद्याद्वामहस्तेन देशिकः । २७

जलपूर्वं प्रदद्यात्तु पश्चाद्वै परिषेचनम्
पितॄणां संविभागेन देवदेवः प्रसीदति । २८

देवदेवप्रसादेन सर्वसिद्धिकरं भवेत्
बलिकार्यं प्रवक्ष्यामि समासादवधारय । २९

बलिञ्च पूर्वतः कृत्वा पश्चादुत्सवमाचरेत्
चरुपात्रं च पुष्पञ्च घण्टां वै धूपपात्रकम् । ३०

बलिदाने विशेषेण शङ्खभेरीरवाकुलैः
गर्भद्वारादि पीठान्तं बलिं दद्याद्विचक्षणः । ३१

कुमुदादि गणानां च इन्द्रादीनां पृथक् पृथक्
मुष्ट्या परिमितै र्द्रव्यैः त्रिर्दद्यात् बलिकर्मणि । ३२

पूर्वमभ्यर्च्य चार्घ्याद्यै र्जलपूर्वं विनिक्षेपेत्
घण्टाशब्देन संयुक्तं बलिवाद्येन संयुतम् । ३३

चण्डं चैव प्रचण्डं च शङ्खपद्मनिधींस्तथा
भद्रं चैव सुभद्रं च तथा धातृविधातृकौ । ३४

जयं च विजयं चैव तत्तद्द्वारेषु पूजयेत्
शङ्खं चक्रं गदां पद्मं मुसलं खड्गमेव च । ३५

शार्ङ्गं च वनमालां च अन्तरावरणे स्थितान्
कुमुदं कुमुदाक्षञ्च पुण्डरीकं च वामनम् । ३६

शङ्कुकर्णं सर्वनेत्रं सुमुखं सुप्रतिष्ठितम्
इन्द्रमग्निं यमं चैव निर्ऋतिं वरुणं तथा । ३७

वायुं सोमं तथैशानं तृतीयावरणे स्थितम्
विश्वेश्वरं च दिग्भागे क्षेत्रपालबलिं ददेत् । ३८

पीठोपरि विशेषेण सर्वभूतबलिं क्षिपेत्
एवं दत्वा विधानेन नित्योत्सवमथाचरेत् । ३९

बलिबिम्बं समादाय यानमारोप्य देशिकः
छत्रचामरसंयुक्तं बहूदीपसमन्वितम् । ४०

अनेकैः परिकरैर्युक्तं गीतवाद्यसमन्वितम्
आनयेद्देवदेवेशं प्रादक्षिण्येन मन्दिरम् । ४१

एकधा वा द्विधा वापि त्रिधा वापि परिभ्रमेत्
बलिपीठं परिभ्राम्य पूर्वपार्श्वे स्थितिं चरेत् । ४२

गीतं नृत्तं च वाद्यं च श्रावयेद्देवदेवकम्
गमयेन्मन्दिरं प्राज्ञो मण्डपे सन्निवेशयेत् । ४३

पूजयेच्च निवेद्यान्त मर्घ्यगन्धादिना तथा
अर्घ्यं पाद्यं तथाचामं गन्धं पुष्पं च धूपकम् । ४४

दीपं निवेदनश्चैव ताम्बूलं गीतवाद्यकम्
स्वस्थाने सन्निवेश्याथ विष्वक्सेनं प्रसादयेत् । ४५

अर्घ्यादिदीपपर्यन्तं पूजयित्वा विचक्षणः
निवेद्यस्यैकपात्रं तु विष्वक्सेनाय दापयेत् । ४६

तच्छेषं देवतावृन्दै र्भुक्तमन्यो न संस्पृशेत्
प्रदक्षिणं ततः कृत्वा प्रणिपत्य जनार्दनम् । ४७

स्वगृहे संप्रविश्याथ अनुयागं समाचरेत्
आचार्ये भोजनाद्धीने देवपूजा च निष्फला । ४८

यथाचाग्निमुखे भुङ्क्ते देवकारिमुखे हरिः
आचार्ये सुप्रसन्ने तु देवदेवः प्रसीदति । ४९

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
अग्निकार्यबलिप्रदानविधिर्नाम अष्टादशोऽध्यायः

---

## अथ एकोनविंशोऽध्यायः

भृगुः—
स्नपनं श्रोतुमिच्छामि देवदेवस्य शार्ङ्गिणः
कालं ब्रूहि मम ब्रह्मन् द्रव्याणां विस्तृतिं क्रमात् । १

श्रीभगवान्—
स्नपनं ते प्रवक्ष्यामि विस्तरेण तवानघ
स्नपनं द्विविधं प्रोक्तं परापरविभेदतः । २

परं तु त्रिविधं प्रोक्त मपरं द्वादशं भवेत्
सहस्रं तदर्धकञ्च तदर्धन्तु तदर्धकम् । ३

त्रिप्रकारं मया प्रोक्तं परंचैव विशेषतः
एकं त्रयं तथा पञ्च नवकं द्वादशं तथा । ४

सप्तदशं पञ्चविंशं षट्त्रिंशच्च नवोत्तरम्
चत्वारिंशद्विशेषेण अशीत्येकादशं क्रमात् । ५

अष्टोत्तरशतं चैव एवं द्वादशकं भवेत्
अयने विषुवे चैव पौर्णमास्यद्वयेऽपि च । ६

द्वादश्यां तु विशेषेण श्रवणे जन्मऋक्षके
अभिषेकदिनेवापि दमनारोहणादिके । ७

उत्सवाद्यन्तकाले तु पुष्पयागे विशेषतः
पवित्रारोहणे चैव तावत् पुष्पफलोत्सवे । ८

चतुःस्थानार्चने चैव अनावृष्टिविधौ तथा
दुर्निमित्ते च संजाते दुर्भिक्षे व्याधिपीडने । ९

विशेषयजने चैव द्रव्याणां पूरणेऽपि च
स्नपनं कारयेद्विद्वानन्यथा दोषकृद्भवेत् । १०

सुवर्णं रजतं वापि ताम्रं मृण्मय मेव वा
पक्वबिम्बफलाकारं मृण्मयं दोषवर्जितम् । ११

आढकंचोत्तमं प्रोक्तं तदर्धं मध्यमं भवेत्
तदर्धमधमं प्रोक्तं त्रिविधं कारयेद्बुधः । १२

तद्वयं करकं प्रोक्तं तद्वयं कुम्भमुच्यते
तद्वयं तु महाकुम्भमेतन्मानं प्रकीर्तितम् । १३

मानेन निश्चितं सर्वं तस्मान्मानं हि पूरकम्
मृत्कुम्भे सूत्रवेष्टं स्याल्लोहे तु परिवर्जयेत् । १४

वस्त्रं कूर्चं शरावं च द्रव्यं सामान्यकं भवेत्
स्नपनं द्विविधं प्रोक्तं कर्माङ्गं केवलं भवेत् । १५

कर्माङ्गे तु विशेषेण नाङ्कुरं कौतुकं भवेत्
केवले तु विशेषेण अङ्कुरं कौतुकं भवेत् । १६

कर्माङ्गमुत्सवाद्येषु विषुवाद्येषु केवलम्
मण्डपालंकृतिं कुर्यात् प्रतिष्ठाकर्मवद्द्विजः । १७

केवले तु हि विप्रेन्द्र चतुस्स्थानार्चनं चरेत्
मण्डलं कारयेद्धीमान् यजमानेच्छया ततः । १८

मण्डपस्योत्तरे पंक्तौ कुम्भमण्डलकुण्डलम्
पूर्वादि पश्चिमान्ते तु क्रमेणैव प्रकल्पयेत् । १९

मण्डपस्य तु मध्ये तु कलशस्थापनं चरेत्
बिम्बसंस्थापनं पूर्वं सूत्रपातं समाचरेत् । २०

कलशस्यानुरूपेण एकद्वित्रितयेऽपि वा
नवकादिषु विप्रेन्द्र सूत्रपातं समाचरेत् । २१

कोष्ठकोणे विशेषेण व्रीहिप्रस्थं प्रपूरयेत्
कलशाधिवासनं कुर्यात् पश्चिमे कलशास्पदे । २२

मार्गत्रयं तथा कृत्वा व्रीहीनास्तीर्य तण्डुलैः
दर्भैः परिस्तरेत्तत्र प्राङ्मुखः परमेष्ठिना । २३

तस्योपरि न्यसेत्कुम्भान् पुरुषेणैव देशिकः
शोषणादिक्रियां कृत्वा अर्घ्याद्यैः परिपूजयेत् । २४

अधोमुखान् न्यसेत्कुम्भान् विश्वेनैव तु देशिकः
अक्षतान्विकिरेत्पश्चात् निवृत्तिमन्त्रेण ? मन्त्रवित् २५

दर्भानुपरि संस्तीर्य सर्पमन्त्रेण मन्त्रवित्
वाससाच्छादयेत्पश्चात् बलिं दद्यात् समन्ततः । २६

द्रव्याधिवासनं कुर्यात् तत्काले देशिकोत्तमः
द्रव्याधिवासने विप्र संपाताज्येन सेचयेत् । २७

एतत्कर्म विशेषेण सर्वसामान्यकं भवेत्
अङ्कुरं कौतुकं चैव तथा कुम्भाधिवासनम् । २८

कर्मारम्भदिनात्पूर्वं सद्यो वा सकलं चरेत्
द्वारपूजाविधिं चैव पुण्याहं चैव कारयेत् । २९

कुम्भमण्डलबिम्बाग्निपूजनं तदनन्तरम्
कलशस्नपनं चैव चूर्णस्नान मनन्तरम् । ३०

शुद्धस्नानं ततः कुर्यात् रजनीस्नानमेव च
सहस्रधारया स्नानं नीराजनमनन्तरम् । ३१

मण्डपासनकार्यञ्च भोज्यासनमतःपरम्
पूर्णाहुतिं ततः कुर्यात् बलिं दद्यात् समन्ततः । ३२

एतत्कर्म क्रमात्प्रोक्तमस्मिन् भद्रमये प्रभो !
एकबेरविधानेतु तत्रैव स्नपनं भवेत् । ३३

बहुबेरविधाने तु स्नपने स्नपनं भवेत्
उत्सवे तु तथाभावे तथाभावे तु कौतुके । ३४

लेपभित्तिपटस्थे तु कर्माचायां समाचरेत्
दर्पणे तदभावे तु तदभावे तु कूर्चके । ३५

कर्माङ्गस्नपने विप्र उत्सवे सर्वमाचरेत्

अथ द्रव्यनाम—

द्रव्यन्यासमथो वक्ष्ये समासादवधारय । ३६

उदक्कुम्भे घृतं प्रोक्तं पञ्चगव्य मथापि वा
केवलं गन्धपुष्पं वा निक्षिपेत्तन्त्रवित्तमः । ३७

तृतीये तु विशेषेण पत्रं पुष्पं फलं भवेत्
पञ्चकुम्भे तु विप्रेन्द्र पञ्चगव्यमथो भवेत् । ३८

गन्धपुष्पफलं चैव पत्रं धान्यं तथैव च
पञ्चगव्यमथोवापि नवके वक्ष्यते ऽधुना । ३९

घृतादिकमथो वापि नवरत्नोदकं तु वा
नवगन्धादिकं वापि द्वादशे वक्ष्यतेऽधुना । ४०

द्विधा वाथ त्रिधावापि चतुरादिघृतादिकम्
धात्रीफलोदकञ्चैव लोध्रतोयमनन्तरम् । ४१

रक्तचन्दनतोयं च रजनीनीरमुत्तमम्
ग्रन्थीफलवचाश्वत्थ तोयं ततः तृणोदकम् । ४२

प्रियङ्गुवारि तदनु मौञ्जीजलमतःपरम्
सिद्धार्थं यवतोयं च सर्वौषधिजलं तथा । ४३

पत्रपुष्पोदकं चैव द्वादशैते प्रकीर्तिताः
अथ सप्तदशे कुम्भे द्रव्यं वक्ष्ये यथाक्रमम् । ४४

घृतमुष्णोदकं चैव रत्नवारि फलोदकम्
लोहम्मार्जनगन्धं च अक्षतं च यवोदकम् । ४५

पाद्यमर्घ्यं तथाचामं पञ्चगव्यं तथा दधि
पयो मधु कषायं च क्रमात्सप्तदशं भवेत् । ४६

पञ्चविंशति कुम्भेषु द्रव्यन्यासमथोच्यते
तन्मध्ये नवके विप्र घृतादीन् परिनिक्षिपेत् । ४७

घृतं पाद्यं दधि चैव अर्घ्यं क्षीर मतः परम्
आचामं गन्धतोयं च पञ्चगव्यं कषायकम् । ४८

धात्रीफलोदकञ्चैव क्रमाद्द्रव्यं विनिक्षिपेत्
षट्त्रिंशत्कलशे ब्रह्मन् द्रव्यन्यासं प्रचक्षते । ४९

द्रव्याणां नवकं प्रोक्तं षट्त्रिंशत्कलशे परम्
घृतादि नवकं वापि गन्धादि नवकं तु वा । ५०

चन्दनं कुङ्कुमंचैव कर्पूरमगरुं तथा
एलालवङ्गतकोल मुशीरं कोष्ठमेव च । ५१

एकोनपञ्चाशत्कलशे द्रव्यन्यासं ब्रवीमि ते
प्रधानसप्तदशकं द्रव्ययोगं क्रमेण च । ५२

मध्यकुम्भे नवं चैव केवलं क्षीरमेव वा
महादि कुम्भषट्के च घृतमेकं प्रपूरयेत् । ५३

विदिकोणचतुष्केषु दधि चैव प्रपूरयेत्
एकाशीतिघटे ब्रह्मन् द्रव्यन्यासक्रमं शृणु । ५४

अत्रसप्तदशं श्रेष्ठं द्रव्यन्यासं क्रमेण तु
घृतादिद्रव्यसङ्घं वा केवलं क्षीरमेव वा । ५५

घृतं वा केवलं विप्र अष्टोत्तरशतं शृणु
द्वात्रिंशकद्रव्यं तेषु मध्ये चैव चतुष्टये । ५६

गन्धं पुष्पं फलं चैव मूलं पत्रं तथाङ्कुरम्
ह्रस्वमण्डलकंचैव दीर्घस्तंबकमेव च । ५७

अथ दीर्घं च तच्चक्रनवकं परिकीर्तितम्
चन्दनं कुङ्कुमं चैव कर्पूरं हिमतोयकम् । ५८

चतुर्मध्यमकुम्भेषु आग्नेयादिषु विन्यसेत्
शतपत्रं तथा जातिर्मल्लिकाबकुलं भवेत् । ५९

पूर्वद्वादशके विप्र मध्ये वै दर्पणे न्यसेत्
कदलीपनसं चैव लिकुचं चैव दाडिमम् । ६०

आग्नेयद्वादशे कुम्भे न्यसेन्मध्ये तु पूर्ववत्
कर्पूरं चैव ह्रीबेरमुशीरं च हरिद्रका । ६१

याम्ये द्वादशके विप्र मध्ये कुम्भचतुष्टये
तुलसीबिल्वपत्रञ्च तथावै दन्तिकाद्वयम् । ६२

नैर्ऋते विन्यसेत्पात्रे वारुणे चाङ्कुरं भवेत्
दूर्वाङ्कुरं सटा भद्रा विष्णुक्रान्तिर्मही गजम् । ६३

मारुते स्तबकं वक्ष्ये शैवाल मगरुं तथा
पूर्वमाथर्विकश्चैव सौम्ये चैव प्रचक्षते । ६४

पुन्नागं पाटलं चैव चूतमारग्वधं तथा
ईशान्ये वक्ष्यते ब्रह्मन् क्रमुकं नालिकेरकम् । ६५

तालं वै रोलकमुकंमध्यमेषु पदेषु च
अथैकादशं प्रोक्तं परे त्रिविधमुच्यते। ६६

सहस्रं च तदर्धं च तदर्धं च त्रयं भवेत्
एकादशघटे ? वक्ष्ये विस्तरेण तवानघ। ६७

एकञ्च मध्यमे स्थाप्य यमे च तु चतुष्टयम्
प्रथमं दिक्‌चतुष्के च मध्ये चैकं प्रशस्यते। ६८

नवके दिगष्टके प्रोक्तं मध्यमे द्वादशं शृणु
अष्टदिगष्टकं प्रोक्तं मध्ये चैव चतुष्टयम्। ६९

सप्तदशक्रमे विप्र मध्यमं नवकं भवेत्
तद्बहि श्चाष्टदेशेषु अष्टकुम्भश्च विन्यसेत्। ७०

पञ्चविंशघटे विप्र मध्यमे नवके न्यसेत्
बहिष्षोडशकुम्भं स्यात् षट्त्रिंशत्कलशं शृणु। ७१

चतुष्टयं चतुर्दिक्षु नवकोष्ठेषु विन्यसेत्
शृणु गुह्यमना विप्र चत्वारिंशन्नवोत्तरम्। ७२

नवकं मध्यमे स्थाप्य अष्टदिक्‌पंचकं भवेत्
एकाशीतिघटे विप्र तत्क्रमं संप्रचक्षते। ७३

नवकं नवकं ब्रह्मन् नवपंक्तिषु विन्यसेत्
अष्टोत्तरशते ब्रह्मन् स्थापनक्रम उच्यते। ७४

द्वादश द्वादश ब्रह्मन् नव पंक्तिषु विन्यसेत्
सहस्रकलशे ब्रह्मन् स्थापनक्रम उच्यते । ७५

क्षेत्रमध्यमदेशेषु अष्टादश घटान् न्यसेत्
नवकोष्ठेषु विप्रेन्द्र द्वितयं द्वितयं न्यसेत् । ७६

तद्बहिस्त्वष्टदेशेषु पञ्चकं पञ्चकं न्यसेत्
अष्टोत्तरशते कुम्भे तद्बहिश्च दिगन्तरे । ७७

द्वादश द्वादश ब्रह्मन् नवपंक्तिषु विन्यसेत्
अष्टोत्तरशतेनैव परितोदिक्षु विन्यसेत् । ७८

एव मष्टादशैःकुंभैः चतुष्षष्ठ्यधिके द्विज
अष्टोत्तरशते कुम्भे प्रत्येकं नवपंक्तिषु । ७९

ब्रह्मादीशानपर्यन्तं पंक्तौ पंक्तौ च विन्यसेत्
शेषं षट्त्रिंशकं कुम्भं निशाचूर्णैश्च पूरयेत् । ८०

द्विप्रकारं मया प्रोक्तं सहस्रघटवेशने
पञ्चाशच्च घटे विप्र स्थापनं कथ्यतेऽधुना । ८१

अष्टोत्तरशत मध्ये परितश्चाष्टदिक्षु च
एकोनपञ्चाशद्विप्र तत्तद्दिक्षु च विन्यसेत् । ८२

पञ्चाशद्विशतानां च कुम्भानां स्थापनं शृणु । ८३

क्षेत्रेषु च चतुर्मध्ये चत्वारिंशमवीत्तरम्
तद्वहिश्चाष्टकुम्भेषु पञ्चविंशतिकं न्यसेत् । ८४

शतद्वयञ्च परितश्चैकचूर्णघटं १ भवेत्
द्रव्यन्यास मथो वक्ष्ये सहस्रकलशेषु च । ८५

मध्य अष्टादशे कुम्भे नवरत्नं विनिक्षिपेत्
द्वन्द्वद्वन्द्वप्रयोगेन विन्यसेच्च घटद्वये । ८६

चत्वारिंशद्धटे बाह्ये चैकैकं मौक्तिकं न्यसेत्
अष्टोत्तरशते चैन्द्रे मूलेन परिपूरयेत् । ८७

ह्रीबेरश्चैव कर्चूरमुशीरं रजनीं तथा
मध्ये कुम्भचतुष्केषु विन्यसेत्पावकान्वितम् १ ८८

बहिरष्टघटे विप्र ह्रीबेरं परितो न्यसेत्
तद्बहि श्चाष्टदेशेषु द्रव्यन्यासं वदामि ते । ८९

रजनीद्वितयञ्चैव शृङ्गिवेर मुशीरकम्
उत्पलत्रितयंक्रान्तं कर्चूरं चाष्टकं भवेत् । ९०

अष्टद्वादश कुम्भे तु प्रीतिद्रव्यन्तु विन्यसेत्
पावकैष्टशते मध्ये चतुष्कं पत्रके न्यसेत् । ९१

तुलसीद्वितयञ्चैव तथा दमनिकाद्वयम्
पावकादि विनिक्षिप्य शेषं वै तुलसीदलम् । ९२

बहिरष्टपदे विप्र पत्रवृन्दं वदामि ते ?
अश्वत्थोदुम्बरवटप्लक्षन्यग्रोधमेव च। ९३

चूतं बिल्वञ्च वकुलं क्रमात्तत्रैव निक्षिपेत्
याम्याष्टके शते विप्र द्रव्यन्यासं प्रचक्ष्यते। ९४

मध्यमे तु चतुष्कुम्भे चम्पकं वकुलं तथा
मालती शतपत्रञ्च आग्नेयादिषु विन्यसेत्। ९५

बहिरष्टघटे विप्र विन्यसेच्छतपत्रिकाम्
तद्बहि श्चाष्टदेशेषु पुष्पपूरं विधीयते। ९६

नन्द्यावर्तञ्च पुन्नागं मालती माधवं तथा
उत्पलत्रितयञ्चैव केतकीचारकं भवेत्। ९७

एकैकं पूरयेत् सर्वान् कुम्भे कुम्भे पृथक् पृथक्
नैर्ऋते चाष्टके ब्रह्मन् फलवृन्दं वदामि ते। ९८

कदलीपनसञ्चैव मातृचूतं ? तथैव च
मध्यमे तु चतुष्कुम्भे पूर्वकं विन्यसेत् क्रमात्। ९९

तद्बहि श्चाष्टकुम्भेषु विन्यसेत् कदलीफलम्
बहिरैन्द्रादियोगेन फलपूरं वदामि ते। १००

लिकुचं वकुलं चैव दाडिमं मातुलुङ्गकम्
प्रारावतं चामलकं नवाङ्गं विश्वमेव च। १०१

एतद्द्रव्यं क्रमेणैव पूरयेत् पूर्ववत् क्रमात्
वारुणे केवलं क्षीरं केवलं घृतमेव च । १०२

वायव्ये संप्रवक्ष्यामि चन्दनं कुङ्कुमं तथा
कर्पूरमगरुश्चैव चतुष्कं विन्यसेत्क्रमात् । १०३

परितश्शिष्टकुम्भेषु केवलं चन्दनोदकम्
बहिःपूर्वादिके विप्र क्रमाद्द्रव्यमथोच्यते । १०४

मुरमाञ्जिष्ठकर्चूरं कोष्ठं वा चम्पकं तथा ?
एलालवङ्गतक्कोलं क्रमाद्द्रव्यं प्रकीर्तितम् । १०५

सौम्ये द्वादशकुम्भेषु क्षीरमेकं प्रपूरयेत्
तद्बाह्याष्ठमदशेषु क्रमाद्द्रव्यं प्रचक्ष्यते । १०६

गोमूत्रं गोमयश्चैव दधि तक्रं तथैव च
तैलं सर्षपतैलं च नालिकेरं घृतं गुलम् । १०७

ईशानकस्थ कुम्भेषु क्रमाद्द्रव्यं निबोध मे
गुलतोयं चेक्षुतोयं शर्करोदकमेव च । १०८

पुण्येषु साधकं चैव चतुष्कुम्भेषु विन्यसेत्
तद्बीजाष्टककुम्भेषु इक्षुसारं प्रपूरयेत् । १०९

बहिः पूर्वादिकुम्भेषु क्रमाद्द्रव्यं निबोध मे
तिलं लाजं च मुद्गं च व्रीहिमाषयवान्तथा । ११०

गोधूमं च प्रियङ्गुं च क्रमात्कुम्भेषु निक्षिपेत्
सहस्रमूर्तिमन्त्रेण स्नापयेत्पुरुषोत्तमम् । १११

ऋग्यजुस्सामाथर्वाद्यैः स्नापयेत्कलशं परम्
अष्टाक्षरेण वा सर्वं द्वादशाक्षरतोपि वा । ११२

पूर्वादिसोमपर्यन्त मुद्धारक्रम इष्यते
आग्नेयादीशपर्यन्त मुद्धारंतु द्वितीयकम् । ११३

पूर्वादिमध्यपर्यन्तं सर्वस्योद्ग्रहणं भवेत्
केवलं क्षीरमेकाङ्गं घृतं वा संभवंभवेत् । ११४

नालिकेरजलैर्वापि केवलन्तु सहस्रकम्
सहस्रार्धघटे वक्ष्ये द्रव्यन्यासं क्रमेण तु । ११५

घृतं गन्धं तथा पुष्पं पत्रं मूलं फलं तथा
पञ्चगव्यं तथा क्षीरं ब्रह्माद्यैशानपश्चिमम् । ११६

ईशाने दधि विन्यस्य स्नापयेत्पुरुषोत्तमम्
अधमं स्नपनं वक्ष्ये द्रव्यन्यासक्रमेणं तु । ११७

मध्यकुम्भेषु सर्वेषु क्षीरमेकं प्रपूरयेत्
बहिश्चाष्टपदे विप्र पञ्चविंशतिसंख्यके । ११८

अर्घ्यं पाद्यं तथाचामं तक्रं दधि घृतं मधु
कषायञ्च क्रमात्प्रोक्तं मूर्द्धनं पूर्ववद्भवेत् । ११९

द्रव्याणामप्यलाभे तु तद्भागैकं प्रशस्यते
द्रव्याणां विष्णुदैवत्यं चक्रिकाणां तु गारुडम् । १२०

सूत्राणां शेषदैवत्यं पात्राणां फणिराजकम् ?
कूर्चेषु ब्रह्मदैवत्य माधारे धर्मदैवतम् । १२१

वाससां वासवो दैवं सर्वेषां विष्णुदैवतम
यस्स्नापयति देवेशं द्रव्ययुक्तघटै र्नर । १२२

सर्वपापविनिर्मुक्त स्स याति ब्रह्मणः पदम्
सोऽतुलां श्रिय माप्नोति सर्वतीर्थफलं लभेत् । १२३

सर्वयज्ञफलश्चैव सर्वदानफलं भवेत्
संसारेण प्रतीयाति नात्र कार्या विचारणा १२४

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
स्नपनविधिर्नाम एकोनविंशोऽध्यायः

## अथ विंशोऽध्यायः

श्रीभगवान्—

उत्सवं संप्रवक्ष्यामि विस्तरेण तवानघ
सवस्त्वमङ्गलं विद्धि उत्सवः स्तन्निवर्तकः ।

नित्यो नैमित्तिकः काम्य उत्सव स्त्रिविधो भवेत्
प्रतिसंवत्सरे मासि क्रियते सति नित्यकः । २

निमित्ते सति संजाते सतु नैमित्तिको भवेत्

भृगुः—

भूतादिदर्शने चैव दुर्भिक्षे व्याधिपीडने ३
परचक्रप्रवेशे च व्योम्नि नेमिस्वने तथा।

दिव्यदुन्दुभिनिर्ह्रादे बालमीनस्य दर्शने। ४

दर्शने सुरचापस्य पूर्वभागे तथा निशि
अपरे मध्यमे वापि उल्कापाते विशेषतः। ५

आलयस्य चाग्निना दाहे प्रासादपतने तथा
प्राकारगोपुरादीनां चैत्यवृक्षादिपातने। ६

वल्मीकादि समुत्पन्ने मधुप्राप्ते तु मण्डले
भूभुजानां विशेषेण रोगादीनामुपस्थितौ। ७

ग्रहदोषे तु संप्राप्ते कुहूदोषसमुद्भवे
पुत्रदारादितो विप्र रोगादीनां समुद्भवे। ८

अनावृष्टौ चातिवृष्टौ देवब्राह्मणघातुके
पितृमातृवधे विप्र प्रायश्चित्तार्थमाचरेत्। ९

उत्सवः परमो ब्रह्मन् नित्यो नैमित्तकः स्मृतः
कामार्थमाचरेद्यस्तु काम्य इत्यभिधीयते। १०

उत्सव स्त्रिविधः प्रोक्त उत्तमादि त्रिभेदतः
उत्तमने मास इत्युक्तः मध्यमः पक्ष उच्यते। ११

नवाहस्त्वधमः प्रोक्त इति शास्त्रस्य निश्चयः
एकाहे च त्र्यहे चैव पञ्चसप्तनवाहके । १२

द्वादशाहे तथा पक्षे मासदूर्ध्वं च कारयेत्
एकाहे च त्र्यहे चैव ध्वजकर्म न कारयेत् । १३

तीर्थकालमथो वक्ष्ये श्रूयतां मुनिसत्तम
अयने विषुवे चैव ग्रहणे सोमसूर्ययोः । १४

राजजन्मदिने वापि अभिषेकदिनेऽपि वा
पौर्णमास्यद्वये वापि श्रवणे सार्वमासिके । १५

प्रतिष्ठादिवसे वापि ग्रामजन्मदिनेऽपि वा
विषुवैकदिने ? विप्र तीर्थस्नानं समाचरेत् । १६

तीर्थस्नानदिनात्पूर्वं ध्वजारोहणमाचरेत्
एकविंशदिने कुर्यान्नवाहोत्सवकर्मणि । १७

कर्मारम्भदिनात् पूर्वमष्टादशदिनेऽपि वा
पक्षे मासे तथा कुर्यान्मासे मासद्वये तथा । १८

अथ वारदिने वापि ? तत्प्रकार स्तथोच्यते
ध्वजारोहणपूर्वं वा भेरीताडनपूर्वकम् । १९

अङ्कुरार्पणपूर्वं तु त्रिविधो भेद उच्यते
ध्वजारोहविधिं वक्ष्ये शृणु गुह्यं महामुने । २०

ध्वजारोहदिनात्पूर्वं पञ्चसप्तदिनेऽपि च
नवाहे वा मुनिश्रेष्ठ एकादशदिनेऽपि वा । २१

अङ्कुरानर्पयेद्विद्वान् पूर्वोक्तेन क्रमेण तु
अङ्कुरं त्रिविधं प्रोक्तं बीजप्रारोहतण्डुलम् । २२

बहुवारे तु बीजं स्यादल्पवारे प्ररोहकम्
सद्यःकाले विशेषेण तण्डलं संप्रचक्षते । २३

पालिका घटिकाचैव शरावं त्रिविधं भवेत्
पवित्रारोपणेचैव कलशस्योत्सवे ? तथा । २४

महाबेरप्रतिष्ठायां पत्रपुष्पफलोत्सवे
देवदेवस्य विप्रेन्द्र त्रिविधश्चाङ्कुरार्पणम् । २५

अन्येषु सर्वकार्येषु पालिकायां समाचरेत्
त्रिवर्गकरणे विप्र एकैकं षोडशं भवेत् । २६

द्वादशं त्वाऽष्टकं वाऽपि षट्कं वाऽपि चतुष्टयम्
केवलं पालिका चेति द्वादशाष्टमथापि ? वा । २७

त्रिवर्गपालिकोच्छ्रायं षोडशाङ्गुलमुत्तमम्
द्वादशाङ्गुल विस्तारमुन्मत्तकुसुमाकृतिः । २८

बिलद्वयसमायुक्ता पालिका संप्रचक्षते
वलयैक समायुक्तं शरावं संप्रचक्षते । २९

घटिका पञ्चवक्त्रा स्यात् चतुर्दिक्ष्मध्यतोन्मुखा
प्रक्षाल्य शुद्धतोयेन बलिं संपूरयेत्तृणैः । ३०

रजनीपत्रदूर्वैश्च बन्धयेत्कण्ठदेशतः
तथा मृद्ग्राहकाले तु आनयेद्विनतासुतम् । ३१

विष्वक्सेनं तथावापि हनूमन्तमथापि वा
नैकैःपरिजनैर्युक्तं खनित्रेण समुद्धरेत् । ३२

पूर्ववद्ग्रहणं कुर्यात् मण्डपालंकृतिं तथा
चतुःस्थानार्चनं चैव तथा द्वारादि पूजनम् । ३३

पुण्याहोक्तिं ततः कुर्यात् कलशं पूर्ववच्चरेत्
मण्डलं स्वस्तिकं वापि चक्राब्जमथवा द्विज । ३४

पटं वक्ष्ये विशेषेण चित्रकर्म विशेषतः
दशहस्ताष्टहस्तं वा सप्तहस्त मथापि वा । ३५

आयामार्धेन विस्तीर्णं शिखरं पुच्छसंयुतम्
निर्णेजितं खलीयुक्तं शोषितं लक्षणान्वितम् । ३६

शिल्पशास्त्रानुसारेण चित्रयेच्चित्रवित्तमः
अर्धमर्धेन विस्तीर्णं पादेन कृतशेखरम् । ३७

मानोन्मानसमायुक्तं नवतालेन कल्पयेत्
पटमध्ये लिखेद्देवं पञ्चवर्णेन शिल्पवित् । ३८

द्विभुजं कनकाकारं करण्डमकुटोज्यलम्
गगने गमनारम्भ पक्षविक्षेपशोभितम् । ३९

धृताञ्जलिपुटं नीलनासाग्रं प्रियदर्शनम्
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् । ४०

उत्कुञ्चितं वामपादं दक्षिणं पृष्ठतःस्थितम्
अनन्तो वामकटको यज्ञसूत्रन्तु वासुकिः । ४१

तक्षकः कटिसूत्रन्तु हारः कार्कोटकस्तथा
पद्मो दक्षिणकर्णे तु महापद्मस्तु वामतः । ४२

शङ्खश्शिरःप्रदेशे तु गुलिकस्तु भुजान्तरे
एतैरष्टोरगैरम्यै भूषितं भुजगोत्तमैः । ४३

छत्रंचोपरिविन्यस्य पार्श्वयोः श्वेतचामरे
दीपदण्डद्वयं पार्श्वे शङ्खं चक्रंतु पार्श्वतः । ४४

अधस्तादम्बुजं पूर्ण कुम्भपात्रञ्च पालिकाः
अन्तरालपदं कालकृष्णेनैव समालिखेत् । ४५

एवं पटं लिखित्वा तु प्रतिष्ठां सम्यगाचरेत्
रज्जुं तन्तुगणेनैव कारयेदङ्गुष्ठनाहतः । ४६

कर्मारम्भदिनात्पूर्वं रात्रौ च रजनीमुखे
देवाग्रे मण्डपे ब्रह्मन् पटमानीय देशिकः। ४७

मूलबेरं दर्शयित्वा विस्तरेद्देवसम्मुखम्
मण्डपस्योत्तरे भागे कुम्भं संस्थाप्य पूर्ववत्। ४८

कुण्डमाग्नेयके कुर्यात् मण्डलं पटपूर्वतः
मण्डलं स्वस्तिकं वापि भूतावास मथापि वा। ४९

तस्य पश्चिमदेशे तु बिम्बसंस्थापनं परम्
द्वारादियजनं कुर्यात् चतुस्स्थानार्चनं चरेत्। ५०

पुण्याहं वाचयेत्पश्चात् कौतुकं बन्धयेत्पटे
छायाधिवासनं कुर्यात् कटाहे मणिकेऽपि वा। ५१

दर्पणे सकलं कुर्यात् तदभावे तु कूर्चके
परिकुम्भं तु संस्थाप्य ब्रह्मकुम्भं तु विन्यसेत्। ५२

याममात्रं जले स्थाप्य यामार्धमथवा भवेत्
कुम्भे संपूजयेद्विप्र ब्रह्मबीजेन साधकः। ५३

रक्षां सर्वेषु कुम्भेषु इन्द्रादीन् परिपूजयेत्
माषान्नेन बलिं कुर्यात् अष्टदिक्षु समन्ततः। ५४

मृद्गतं ? सर्वदेवेशं पटे संयोजयेद्बुधः
नयनोन्मीलनं कुर्यात् पूर्ववद्द्विजसत्तम। ५५

मृदालेपं ततः कुर्यात् पर्वताग्रस्थमृत्स्नया
दर्पणे तु समावाह्य स्नानवेद्यां निवेशयेत्। ५६

स्नपनं पूर्ववत्कुर्यात् चूर्णस्नानमनन्तरम्
शुद्धस्नानं मन्त्रस्नानं नीराजनमनन्तरम्। ५७

पटे संयोजनञ्चैव शयनस्य च कल्पनम्
पटस्य दक्षिणे पार्श्वे कुम्भं संस्थापयेद्बुधः। ५८

वर्धनी परिकुम्भांश्च अष्टमङ्गलकानपि
पालिका परितस्स्थाप्य कुम्भे संपूजयेत् प्रभुम्। ५९

पटस्थं गरुडं विप्र पूजयेत्स्वीयविद्यया
होमकर्म ततः कृत्वा मन्त्रन्यासं समाचरेत्। ६०

पायसादि निवेद्याथ बलिं दद्यात्समन्ततः
कुम्भस्थं गरुडं चैव पटमध्ये नियोजयेत। ६१

देवतावाहनं वक्ष्ये भेरीताडनसंयुतम्
सध्वजे ? तु विशेषेण तद्रात्रौ सकलं भवेत्। . ६२

भिन्नध्वजे तथा ब्रह्मन् ध्वजास्यारोहणं ? भवेत्
पटमध्ये तु गरुडं मार्गत्रयमथाचरेत्। ६३

शयनं कल्पयित्वैवं बलिबेरं निवेशयेत्
बलिबेरस्य पूर्वे तु कुम्भं संस्थापयेद्बुधः। ६४

कुम्भस्य पूर्वभागे तु भेरीश्चैव तु विन्यसेत्
दर्भैः परिस्तरै स्तत्र वासुदेवादिकान् न्यसेत् । ६५

पुण्याहं वाचये द्विद्वान् तद्बलिं परिपूजयेत्
भेरी मभ्यर्चयेद्विद्वान् कांस्यघण्टादिसंयुतम् । ६६

शङ्खश्च काहलश्चैव झल्लिका मद्दलं तथा
पटहं चैव तिमिलं ह्रस्वमद्दलकं भवेत् । ६७

कांस्यतालगणश्चैव परितश्च निवेशयेत्
कुम्भे सम्यग्विशेषेण देवान् सर्वान् समाह्वयेत् । ६८

इन्द्रमग्निं यमश्चैव नैर्ऋतं वरुणं तथा
वायुं सोमं तथेशानं इन्द्रादित्यमरुद्गणान् । ६९

(वसवोष्टौ द्वादशादित्या रुद्रा एकादश क्रमात्)

बलिभुजः कुमुदादि पुरोदितान्
हरिमहोत्सवकर्मणि वास्तुषु
वद ममाखिलदेवगुरोर्गुरोः
प्रतिदिशं हरिपारिषदान् क्रमात् । ७०

अहं खल्वखिलाण्डयोनेश्शेषधिषणादीशचतुराप्रमेयस्य अनवरतसुखिनो हरे र्महोत्सवादिषु ग्रामादिवास्तुषु इन्द्रादिदिक्स्थितानां कुमुदादीनां वर्णरूपवाहनायुधपरिवारमन्त्रार्चनादीन् यथामति कथयिष्ये ।

स्कन्धासनस्थकमलासखवासुदेवं
वेगावधूतपवमानसवेगयानम् ।
नागाधिपग्रहणलोलुपवक्रतुण्ड-
मावाहयामि विहगाधिपमुत्सवादौ । ७१

एवं संस्मृत्यार्घ्यपाद्याचमनगन्धपुष्पधूपदीपैरभ्य-
र्च्यानन्तरं तद्वत् बलिं द्रव्यं नैवेद्यं दत्वाऽचमानाञ्जलिं
दर्शयित्वा हरेर्मुखवासं विधाय तद्दिग्देवतृप्त्यर्थं
शङ्खदुन्दुभिनृत्तगीतादि कारयेत् ।

दम्भोलिभीषणभुजाय सुराधिपाय
श्यामाय दानवकुलक्षयकारणाय
पूर्वाधिपाय सुरवारणवाहनाय ।
तुभ्यं पुलोमतनयापतये नमोऽस्तु ७२

एवं—अग्ने तु हव्यमनिशं वहते सुराणां
कव्यं समीपमथवा नयते पितॄणाम्
धूमध्वजाय दहनाय जुहूदराय
शोणाय कोणपतये भवते नमोऽस्तु । ७३

एवं—कालाय लोकसमदण्डविधायकाय
नीलप्रभाय महिषाधिपवाहनाय
दण्डायुधाय तनयाय विकर्तनस्य
[illegible]

श्यामाय भीषणमृगाधिपवाहनाय
कोणाधिपाय लसदुग्रकृपाणकाय
तुभ्यं पिशाचकुलराक्षसयातुधान
सेनावनप्रियकृते निर्ऋते नमोऽस्तु । ७५

श्यामलाय मकराधिरोहिणे
तुभ्यमुल्लसितपाशपाणये
जीवनाय वरुणाय कुर्महे
देहिनामपरदिक्पतये नमः । ७६

प्राणादि भेदकजुषे धृतकेतनाय
धूम्राय तुङ्गमृगपुङ्गववाहनाय
कोणाधिपाय जगतामधिपावनाय
वाताय तीव्रगतये भवते नमोऽस्तु । ७७

सुवर्णवर्णाय शिवप्रियाय
धनाधिनाथाय गदायुधाय
उदग्दिगीशाय हराद्रिवासिने
नमोऽस्तु तस्मै हरवाहनाय । ७८

वृषाधिरूढाय जटाय मौलिने
कपालबालेन्दुकलावतंसिने
त्रिशूलिने कोणदिशाधिवासिने

एवं—प्रतप्तकल्याणनिभाय बिभ्रते
करेऽक्षमालावलयं कमण्डलुम्
स्वयंभुवे हंसवराधिरोहिणे
नमोऽस्तु तुभ्यं जगातां सिसृक्षवे । ८०

घोषयेत् सर्ववाद्यानि वाद्यकर्मविशारदैः
ग्रामे वा नगरे वापि पत्तने वा महामते । ८१

वीथीमुखमलंकुर्यात् रम्भापूगध्वजाङ्कुरैः
दीपैः पूर्णघटै श्चैव दर्भमाल्यैश्च तोरणैः । ८२

इन्द्रादीशानपर्यन्तं बलिं दद्याद्विचक्षणः
उत्सवं बलिबेरञ्च घटं वै देवसम्मुखम् । ८३

आरोप्य परिकरैः सार्धं तालवृन्तगणै र्युतम्
अनेकध्वजसंयुक्तं वाद्यवादनसंयुतम् । ८४

ग्रामस्येन्द्रादि दिग्भागे तिष्टन्वै देवतामुखम्
गोमयालेपनं कुर्याद्धस्तमात्रप्रमाणतः । ८५

दर्भासनं ततः कृत्वा देवमुद्दिश्य साधकः
आवाहयेत्ततो देवमिन्द्रं कुमुदमेव च । ८६

अर्घ्यं पाद्यं तथाचामं गन्धं पुष्पं च धूपकम्
बलिं ताम्बूलकश्चैव श्लोकपूर्वं तथा यजेत् । ८७

भेरीताडनकश्चैव तालवादनपूर्वकम्
गीतं नृत्तं च वाद्यं च सर्वदेशेषु च क्रमात्। ८८

कान्तारं पूर्वदिग्भागे कौशिकं दक्षिणे तथा
पश्चिमे कामदं प्रोक्तं तर्करागं तथोत्तरे। ८९

आग्नेय्यान्तु कौलीस्यान्नैर्ऋते नटभाषणम्
तर्केशी वायुदिग्भागे चालापाणी तु शाङ्करे। ९०

मध्यमे पञ्चमं प्रोक्तं पीठस्थाने तु मालवी
ऐन्द्रे तु देशीनृत्तं स्यादाग्नेये मल्लकं भवेत्। ९१

दक्षिणे तु घटक्रीडा युद्धक्रीडा च नैर्ऋते
पश्चिमे कन्दुकक्रीडा गणक्रीडा च मारुते ९२

मार्गमुत्तरतो विद्याद्भुजङ्गश्चैशके परम्
ब्राह्मे गणभुवं प्रोक्तं पीठपार्श्वे तु मङ्गलम्। ९३

खेटकं याम्यभागे तु नैर्ऋते चक्रमण्डलम्
क्रमस्थः पूर्वदिग्भागे शब्दमाग्नेयके भवेत्। ९४

गारुडं वारुणे भागे हास्यनृत्तं तु मारुते
मङ्कलं सोमदिग्भागे महानृत्तं तु शाङ्करे। ९५

ब्राह्मे तु सर्ववाद्यं स्यात् पीठदेशे यथारुचि
एवमेव प्रकारेण बलिं कुर्यात्समन्ततः। ९६

पीठस्य दक्षिणे स्थित्वा ध्वजारोहणमाचरेत्
ध्वजदण्डं प्रतिष्ठाप्य स्तम्भं चन्दनकं तथा । ९७

तेकवृक्षं च खदिरं पनसं पाटलं तु वा
क्रमुकं नालिकेरं च तालं वेणुं तथैव च । ९८

स्वयंशुष्कं च पतितं कोटरं वक्रकं त्यजेत्
शततालं तदर्धं वा तस्यार्धमथापि वा । ९९

अशीतितालमिच्छन्ति केचित्तस्यार्धमेवा वा
प्रासादोच्छ्रायमानं वा गोपुरोच्छ्रायकं भवेत् । १००

द्वात्रिंशदङ्गुलं मूलं मध्याग्रे बिलकं विना
....त्र्यंशभागेन मानसूत्रं प्रकल्पयेत् । १०१

पीठकत्रितयं कुर्यात् यन्त्राकारन्तु पीठकम्
निर्गमस्सममानन्तु ? यष्टिं तत्रैव योजयेत् । १०२

पीठमौदुम्बरं वापि अश्वत्थं वापि कारयेत्
यष्टिं वेणुं खादिरं वा यष्ट्यग्रं सममानकं । १०३

दर्भमाल्यैश्च संवेष्ट्य प्रादक्षिण्यक्रमेण तु
अन्तर्दर्भसमायुक्तं दर्भखण्डन्तु वाग्रतः । १०४

अवटस्योत्तरे भागे उदग्दण्डन्तु शाययेत्
सङ्कटे सति विप्रेन्द्र यथादेशानुरूपतः । १०५

प्रागग्रमुदगग्रं च कारयेद्देव कर्मणि
प्रक्षाल्य शुद्धतोयेन पुण्याहं प्रोक्षणं चरेत् । १०६

गन्धपुष्पै स्समभ्यर्च्य यन्त्रेणैव समुद्धरेत्
बद्धध्वजपटं वापि केवलं वापि कारयेत् । १०७

स्तम्भमूलं द्रढीकुर्यात् पीठं सम्यक् प्रकल्पयेत्
त्रिहस्तं वा द्विहस्तं वा पञ्चहस्त मथापि वा । १०८

हस्तोच्छ्रायं तथा कुर्यात् तदूर्ध्वे मेखलात्रयम्
तदूर्ध्वे पद्मकं कुर्यात् द्वादशाष्टदलै र्युतम् । १०९

स्तम्भस्य परितः कुर्यात् मण्डपं सप्रपं तु वा
अरोहयेध्द्वजं पश्चात् रज्जुना देशिकोत्तमः । ११०

पुण्याहं पूर्वतः कुर्यात् समभ्यर्च्य यथाविधि
हविर्निवेदयेत् पश्चात् कुम्भप्रोक्षणपूर्वकम् । १११

सन्निधौ देवदेवस्य नृत्तगीतादिकं चरेत्
वीथीं प्रदक्षिणीकृत्य उत्सवं संप्रवेशयेत् । ११२

ध्वजारोहणकाले तु भेरीं शृण्वन्ति ये जनाः
ते र्नदीतरणं नैव न यानं योजनात्परम् । ११३

गमने सति सम्मोहाद्व्याधिमाप्नोति नित्यशः
तस्मात् सर्वप्रयत्नेन बहिर्यानं विवर्जयेत् । ११४

इति संक्षेपतः प्रोक्तो ध्वजारोहविधि र्मया।

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
ध्वजारोहणविधिर्नाम विंशोऽध्यायः

---

## अथ एकविंशोऽध्यायः

श्रीभगवान्—

महोत्सवं प्रवक्ष्यामि विस्तरेण तवानघ
अङ्कुरावापनं पूर्वं पताकारोपणं तथा। १

कौतुकस्योत्सवं पश्चात् उत्सवारंभणं भवेत्
स्नपनं देवदेवस्य यागदीक्षाह्यनन्तरम्। २

चतुस्स्थानार्चनश्चैव होमकर्माण्यनन्तरम्
तीर्थाङ्कुरार्पणश्चैव ग्रामस्य च बलिं तथा। ३

यात्राचोत्सवबिम्बस्य तथा तीर्थाधिवासनम्
तीर्थस्नानं ततः कुर्यात्पुष्पयागमनन्तरम्। ४

ध्वजावरोहणकश्चैव उद्वासनबलिं तथा
विषक्सेनार्चनश्चैव कर्मक्रममिमं विदुः। ५

उत्सवारम्भदिवसात् सप्तमे पञ्चमेऽहनि
अङ्कुरस्यार्पणं कुर्यात्पूर्ववच्चोक्तवर्त्मना। ६

उत्सवारम्भदिवसात् पूर्वेद्युश्च निशामुखे
कौतुकं बन्धयेद्धीमान् तत्क्रमस्ते प्रवक्ष्यते । ७

मण्टपं समलंकृत्य ध्वजतोरणकुम्भकैः
क्रमुकैः कदलीकाण्डै दर्भमाल्यादिकै स्तथा । ८

तन्मध्ये वेदिकां कुर्यात् विष्णुयन्त्रं प्रकल्पयेत्
मण्टपस्येशदिग्भागे कुम्भं संस्थापयेत्सुधीः । ९

पूर्ववदग्निपार्श्वे तु कुण्डं कुर्याद्विचक्षणः
मण्डलात्पश्चिमे बिम्बं स्थापयेत्तु यथाविधि । १०

द्वारादियजनं कृत्वा चतुःस्थानार्चनं यजेत्
कौतुकं कारयेद्विद्वान् सौवर्णेनैव देशिकः । ११

तन्तुसूत्रयुतश्चैव उत्सवस्य विशेषतः
देवीभ्यान्तु विशेषेण बलिस्नपनबेरयोः । १२

आचार्यस्य विशेषेण ऋत्विजानां तथैव च
पृथक् तण्डुलपात्रेषु ताम्बूलसहितं न्यसेत् । १३

शिष्यस्य शिरसि स्थाप्य प्रादक्षिण्येन मन्दिरम
वेदघोषसमायुक्तं गीतवाद्यसमन्वितम् । १४

धान्यराशिं विनिक्षिप्य आधारोपरि विन्यसेत
पुण्याहं वाचयेत पश्चात ब्राह्मणैस्सह देशिकः । १५

बिम्बं संपूजयेत् पश्चात् पूजयेत् प्रतिसरीयकम्
सूत्रमादाय हस्ताभ्यां धारयित्वा विचक्षणः । १६

बन्धयेद्दक्षिणे हस्ते देवदेवस्य शार्ङ्गिणः
श्रियो वामकरे कुर्यात् आचार्यस्य स्वहस्तके । १७

पूजयित्वा यथापूर्व मपूपादि निवेदयेत्
मुद्गान्नं तु निवेद्याथ बलिं दद्यात् समन्ततः । १८

शयनं कल्पयित्वा च शयने सन्निवेशयेत्
उषःकालोत्सवं कुर्यात् सर्वैः परिकरै स्सह । १९

अनेकदीपसंयुक्तं गीतवाद्यादिसंयुतम्
स्वस्तिवाचनसंयुक्तं सर्वमङ्गलसंयुतम् । २०

वीथ्यावरणपूर्वं तु अन्तरावरणपश्चिमम्
एवं संभ्रामयित्वा तु मण्टपे सन्निवेशयेत् । २१

नृत्तगीतादिसकलं दर्शयित्वा विचक्षणः
उत्सवारम्भणे स्नान मारभेन्मन्त्रवित्तमः । २२

अष्टोत्तरशतै र्वापि एकाशीतिघटैस्तु वा
कलशैः स्नापयेत्पश्चात् चूर्णस्नानं समाचरेत् । २३

अलकारासने नीत्वा अलंकृत्य यथाविधि
यामगण्डपभूमौ तु पश्चिमे सन्निवेशयेत् । २४

श्रीभूमिसहितं विप्र बलिबिम्बसमन्वितम्
यागदीक्षाविधिं वक्ष्ये समासादवधारय । २५

मण्डपं चाग्रतः कुर्यात् अग्रालाभे यथारुचि
मण्टपं समलंकृत्य वितानाद्यैरलंकृतम् । २६

ध्वजतोरण कुम्भाद्यै रम्भापूगसमन्वितैः
भित्तिचित्रविचित्रंस्यान्मण्डलं कारयेद्बुधः । २७

मण्डलस्योत्तरे पार्श्वे कुम्भं संस्थापयेद्बुधः
कुम्भमण्डलयोर्बाह्ये परितः कुण्डमाचरेत् । २८

पूर्वादीशानपर्यन्तं कुण्डक्लृप्तिमथ शृणु
त्र्यश्रं वृत्तं षडश्रं वा वस्वश्रं विदिशःक्रमात् । २९

अष्टकुण्डविधौ विप्र चतुष्कुण्डविधिं शृणु
अश्रं चाप मथो वृत्तं पद्मं पूर्वादितःक्रमात् । ३०

मुख्यकल्पे तु विप्रेन्द्र अष्टकुण्डं प्रकल्पयेत्
ऋत्विजो वरयेत्पूर्वं कुण्डे कुण्डे पृथक् पृथक् । ३१

मण्डलस्य तु पूर्वे तु गरुडं सन्निवेशयेत्
दक्षिणे चक्रराजं च पश्चिमे बलिबेरकम् । ४०

सेनेशमुत्तरे पार्श्वे अलंकृत्य निवेशयेत्
मण्डलं चक्रपद्मं वा इष्टसिद्धिप्रदं तु वा । ३३

वासुदेवाख्य यन्त्रं वा कारयेत्तु यथारुचि
कुम्भमण्डलकुण्डन्तु परिकुम्भसमन्वितम् । ३४

महाकुम्भस्य पार्श्वे तु वर्धनीं संनिवेशयेत्
उपकुम्भसमायुक्त मष्टमङ्गलकैर्युतम् । ३५

पालिकाभिः समायुक्तं फलैर्नानाविधैर्युतम्
दीर्घस्तबकसंयुक्तं क्रमुकैर्नालिकेरकैः । ३६

वस्त्रयुग्मं महाकुम्भे एकमन्यत्र योजयेत्
कूर्चपल्लवसंयुक्तं शरावे सूत्रसंयुतम् । ३७

शरावे तु शरावे तु नालिकेरफलं न्यसेत्
एवंकृत्वा विशेषेण द्वारपूजां समाचरेत् । ३८

कुम्भे संपूजयेद्देवं वासुदेव मनामयम्
उपकुम्भे यजेद्देवान्वासुदेवादिकान् क्रमात् । ३९

अनेकैरुपचारैश्च चतुष्षष्टिगणैस्तु वा
कुम्भे च मण्डले चैव प्रोक्षणस्नानमाचरेत् । ४०

अग्नौ चैव विशेषेण उपचारैः पृथग्घुवेत्
मण्डले पूजयेत्पश्चात् बिम्बं संपूजयेत्परम् । ४१

होमकार्यं ततः कृत्वा वासुदेवादि मन्त्रतः
प्रभवाव्यययोगेन अष्टकुण्डेषु होमयेत् । ४२

तीर्थाङ्करार्पणं कुर्यात् पूर्वोक्तक्रमयोगतः
बलिं कृत्वा तथा वीथ्यां बलिबेरसमन्वितम् । ४३

कुमुदादिगणै र्युक्तं गीतवाद्यसमन्वितम्
उत्सवं यानमारोप्य कुञ्जरं वा रथं तु वा । ४४

शिबिकांवा विशेषेण यथालब्धानुरूपतः
नैकैः परिकरै र्युक्तं बहुदीपसमन्वितम् । ४५

अन्तरावरणपूर्वं वीथ्यावरणपश्चिमम्
बलिस्थाने तु संप्राप्ते ताम्बूलं चन्दनं ददेत् । ४६

मध्यदेशे तु संप्राप्ते गणक्रीडां समाचरेत्
एवं कृत्वा विशेषेण महामण्डपमानयेत् । ४७

सिंहासने निवेश्याथ अर्घ्याद्यैः परिपूजयेत्
अर्घ्यं पाद्यं तथाचामं गन्धं पुष्पञ्च धूपकम् । ४८

दीपं नीराजनं चैव बहुनृत्तं प्रदर्शयेत्
वस्त्रमाल्यान्यपोह्याथ स्नानकर्म समाचरेत् । ४९

स्नानान्ते देवदेवेशं मण्डपे संनिवेशयेत्
पूजनंत्वथ विप्रेन्द निवेद्यान्तं समाचरेत् । ५०

प्रथमे स्यन्दनं प्रोक्तं द्वितीये शिबिका भवेत्
तृतीये गरुडं प्रोक्तं चतुर्थे रथमेव च । ५१

पञ्चमे दोलिकायानं षष्ठे वै कुञ्जरं तथा
सप्तमे पुष्पयानं स्यादष्टमे चाश्ववाहनम् । ५२

नवमे कुञ्जरप्राभा दशमे कुञ्जरं भवेत् ?
तीर्थाधिवासनात्पूर्वं मृगयादिवसं भवेत् । ५३

मृगयादिवसात्पूर्वं जलक्रीडावगाहनम्
जलक्रीडादिनात्पूर्वमुद्यानगमनं भवेत् । ५४

उद्यानगमनात्पूर्वं नदीयात्रां समाचरेत्
नदीयात्रादिनात्पूर्वं व्रीहिमानमथोच्यते । ५५

व्रीहिमानदिनात्पूर्वं वनवासमथाचरेत्
यात्राचोत्वबिम्बस्य द्विकाले चोत्तमा भवेत् । ५६

एककालमथोवापि कर्तुरिच्छानुरूपतः
अपूर्वाभरणैर्माल्यैरपूर्वैश्चाम्बरैस्तथा । ५७

अपूर्वोद्यानयानाद्यै यथाकौतूहलं भवेत्
तथा विशिष्य कर्तव्यं यावत्तीर्थदिनावधि । ५८

तीर्थस्नानदिनात्पूर्वं रात्रौ तीर्थाधिवासनम्
मण्डपं समलंकृत्य तीर्थबेरं समानयेत् । ५९

धान्यपीठं प्रतिष्ठाप्य तीर्थबेरं समानयेत्
अर्घ्याद्यैरर्चयित्वाथ कुम्भं संस्थापयेत्सुधीः । ६०

कुम्भे तीर्थं समावाह्य पूजयित्वा विचक्षणः
हविर्निवेदयेत्पश्चात् बलिं दद्यात् समन्ततः। ६१

रजनीचूर्णमादायोलखले तु विनिक्षिपेत्
उलूखलं मुसलं चैव प्रक्षाल्याभ्यर्च्य देशिकः। ६२

आचार्यावगाहनं पूर्वं गणिकाभिरनन्तरम्
चूर्णेन घट्टनं वापि पञ्चकं त्रितयन्तु वा। ६३

स्थण्डिले संप्रतिष्ठाप्य कूर्चञ्चैव विनिक्षेपेत्
अभ्यर्च्य पुंसिमन्त्रेण ? पुण्याहं चैव कारयेत्। ६४

पुनरभ्यर्च्य देवेशं चूर्णस्नानं समाचरेत्
वासुदेवतनुस्पृष्टं चूर्णं परमपावनम्। ६५

पादस्पृष्टजलं विप्र गङ्गातोयसमं भवेत्
तुलसी चन्दनं पुष्पं सर्वपापहरं नृणाम्। ६६

तस्मात्सर्वप्रयत्नेन भक्तानां च प्रदापयेत्
ये वहन्ति पिबन्त्येतत् ते च यान्ति परांगतिम्। ६७

अवभृथस्नानम्—

ततः प्रभाते विमले वासरोत्सवमाचरेत्
पुरशोधनपूर्वन्तु यथापूर्वं बलिं क्षिपेत्। ६८

यात्रावसाने देवेशं मूलबेरपुरस्सरम्
महाकुम्भस्थकूर्चेन प्रोक्षयेन्मूलमन्त्रतः। ६९

पूजया संपुटीकुर्यान्मण्डले तु नियोजयेत्
वह्निस्थं तु विशेषेण पूर्णाहुतिपुरस्सरम् । ७०

प्रायश्चित्ताहुतिश्चैव कुम्भमण्डलपूजनम्
यथापूर्वं पुरा कृत्वा पश्चात्प्रोक्षणमाचरेत् । ७१

तीर्थबेरं समारोप्य यानं विप्रवरैर्द्विज
उत्सवान्ते समादाय केवलं तीर्थबेरकम् । ७२

आनयेत्तीर्थदेशे तु प्रभां तत्रैव कारयेत्
तीर्थदेशं समासाद्य प्रभामध्ये निवेशयेत् । ७३

तीर्थकुम्भं समादाय योजयेत्तज्जलैः पुनः
तत्तीर्थन्तु समभ्यर्च्य कलशैःस्नापयेत्प्रभुम् । ७४

पश्चात्तीर्थं तु संप्राप्य निमज्य च त्रिधा पुनः
ये स्नापयन्ति संप्राप्य गङ्गास्नानफलं लभेत् । ७५

सर्वदानफलञ्चैव सर्वतीर्थफलं लभेत्
स्वस्थाने संनिवेश्याथ शुद्धस्नानं समाचरेत् । ७६

मन्त्रस्नानं ततः कृत्वा नीराजनमथाचरेत्
अलङ्कारासनं नीत्वा हविरन्तं समर्चयेत् । ७७

मन्दिरं प्रापयेद्देवं सर्वैः परिकरैः सह
ब्राह्मणै र्वेदघोषैश्चालयावरणपश्चिमम् । ७८

उत्सवेन सह वीथ्यां तीर्थबेरं समानयेत्
स्वस्थाने सन्निवेश्याथ द्वारे शङ्खं निनादयेत् । ७९

उत्सवं मण्डपे स्थाप्य स्नपनं कारयेद्बुधः
अलंकारासने नीत्वा प्रभूतान्नं निवेदयेत् । ८०

दशमेऽहनि संप्राप्ते पुष्पयागं समाचरेत्
सन्निधौ देवदेवस्य वेदपारायणं चरेत् । ८१

संहिताश्चैव शाखाश्च आरणं तदनन्तरम्
ऋग्यजुस्सामवेदांश्च तथाथर्वणमेव च । ८२

संभावयेत्ततो देवान् वस्त्रताम्बूलभोजनैः
स्नपनं पुष्पयागार्थं कारयेदुक्तवर्त्मना । ८३

कौतुकं बन्धयेत्पूर्वं देवदेवस्य शार्ङ्गिणः
अग्निमण्डलमासाद्य पुष्पमण्डलमाचरेत् । ८४

चक्राब्जयन्त्रकं वापि आचार्यस्य वशात्तु वा
मण्डलस्य तु पाश्चात्ये बिम्बं सिंहासने न्यसेत् । ८५

मण्डलस्योत्तरे पार्श्वे कुम्भं संस्थापयेद्बुधः
देवस्येशानभागे तु विष्वक्सेनं निवेशयेत् । ८६

दक्षिणे हेतिराजानं ब्राह्मणान्परितो न्यसेत्
द्वारार्चनं ततः कुर्यात् कुम्भमण्डलपूजनम् । ८७

बिम्बे संपूजयेत्पश्चात् अष्टौ द्वादशधापि वा
षट्कं चतुष्टयं कालं प्रत्येकन्तु विशेषतः । ८८

अर्घ्यं पाद्यं तथाचामं गन्धं पुष्पं च दीपकम्
धूपंचैव नैवेद्यं ताम्बूलं तिलदानकम् । ८९

वेदं श्लोकं तथा गीतं नृत्तं वाद्यं पुनःपुनः
गीतन्तु मङ्गलं प्रोक्तं नृत्तं वै मार्गनृत्तकम् । ९०

पूष्पपूरं समाहृत्य पृथक् पात्रे निवेशयेत्
सन्निधौ स्थापयित्वा च पुष्पपत्रैस्समर्चयेत् । ९१

शोषणादि क्रियां कृत्वा अर्घ्याद्यैः संप्रपूजयेत्
अर्घ्यं गन्धं तथा पुष्पं धूपश्चैव चतुष्टयम् । ९२

स्थापयेदम्बरेणैव विकिरेद्देवपादयोः
शिल्पदासगणान् सर्वान् संभावनमथाचरेत् । ९३

चन्दनैश्चैव ताम्बूलैः देववस्त्रं प्रदापयेत्
आचार्यै स्साधकैश्चैव बिभवेद्देव मूर्धनि । ९४

यात्रां च कारयेद्धीमान् प्रादक्षिण्येन मन्दिरम्
एकधा वा द्विधा वापि स्थित्वा द्वारप्रदेशतः । ९४

स्तोत्रेण तोषयेद्देवं जनानाहूय देशिकः
सेवार्थमागतान् सर्वान् देवानृषिगणानपि । ९६

विलोक्य देवदेवेशं स्वस्थाने तु विसर्जयेत्
देवं गर्भगृहे नीत्वा स्वस्थाने संनिवेशयेत् । ९७

तत्कुम्भन्तु समादाय आधारोपरि विन्यसेत्
मूलबेरं समभ्यर्च्य प्रोक्षयेन्मूलमन्त्रतः । ९८

पुनःपूजां ततः कुर्यान्मङ्गलादि प्रदर्शयेत्
पायसन्तु निवेद्याथ यजमानं प्रपूजयेत् । ९९

देशिकं यानमारोप्य स्वगृहं संप्रवेशयेत्
देववद्दासदासीभिर्वाद्यशङ्खरवाकुलैः । १००

जनान् संपूजयेत्सर्वान् ताम्बूलाद्यैरकृत्रिमैः
देवालयं प्रविश्याथ स्नापयेदौत्सवं पुनः । १०१

एकाशीतिघटे ब्रह्मन् अथवा पञ्चविंशके
स्नपनान्ते विशेषेण यागमण्डपमाविशेत् । १०२

कर्मशेषं समासाद्य प्रायश्चित्ताहुतिं हुवेत्
तिलेनैव विशेषेण पूर्णाहुति मथाचरेत् । १०३

तत्रस्थदेवता स्सर्वा गमयेत्स्वस्वमालयम्
गर्भगेहे यथापूर्वं सन्निवेश्य महोत्सवम् । १०४

उद्वासनबलिं कृत्वा ध्वजं चैवावरोहयेत्
समभ्यर्च्य यथापूर्वं मुद्गान्नं तु निवेदयेत् । १०५

कुम्भे गरुडमावाह्य अवरोहण माचरेत्
तद्यष्टिं तत्पटञ्चैव तद्दण्डं तत्प्रभां तथा । १०६

आचार्यस्स्वयमाहृत्य अन्यथा दोषकृद्भवेत्
दक्षिणां दापयेद्विद्वान् वस्त्रहेमादिरत्नकैः । १०७

पञ्चाङ्गभूषणं चैव कन्यागोभूमिसद्मनैः
ऋत्विजां तु तदर्धं स्यात् गायकानां यथाबलम् । १०८

देशान्तरागतानां तु मानाद्यै स्तुष्टिमावहेत्
एवं यः कुरुते भक्तया उत्सवं शास्त्रचोदितम् । १०९

सोऽतुलां श्रियमाप्नोति कोटिधर्मफलं लभेत्
अश्वमेधसहस्रं च वाजपेयशतं तथा । ११०

सर्वतीर्थफलञ्चैव बहुगोदानजं फलम्
बहुधर्मफलं चैव लभते नात्रसंशयः । १११

सर्वपापक्षयं यति नात्र कार्या विचारणा
द्विकालस्नपनं कुर्यात्स्नानविद्धे विशेषतः । ११२

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
महोत्सवविधिर्नाम एकविंशोऽध्यायः

## अथ द्वाविंशोऽध्यायः

श्रीभगवान्—

मासोत्सवविधिं वक्ष्ये समासाच्छृणु सांप्रतम्
मासि मासि विशेषेण द्वादश्यां विषुवद्वये । १

नक्षत्रेषु च सर्वेषु श्रवणं चोत्तमं भवेत्
तिथीनां द्वादशी श्रेष्ठा वाराणां शुक्रवासरम् । २

योगानान्तु व्यतीपातं करणानान्तु विष्टिकम्
मासि मासि विशेषेण द्वादश्यान्तु समर्चयेत् । ३

अमावास्यां पौर्णमास्यां मासार्धे वा समर्चयेत्
द्वादश्यान्तु विशेषेण मण्डलाराधनं चरेत् । ४

अमावास्यां विशेषेण कलशैस्स्नपनं चरेत्
घृतं वा क्षीरमेव स्यान्नालिकेरजलं तु वा । ५

उक्तद्रव्यमथो वापि यजमानेच्छया गुरुः
श्रवणे तु विशेषेण चतुस्स्थानार्चनं चरेत् । ६

मानसक्षेत्रके ब्रह्मन् पत्रपुष्पादिकं न्यसेत्
माघमासे तु माघर्क्षे दमनारोपणं चरेत् । ७

फल्गुने मासि ऋक्षे च तुलस्यारोपणं चरेत्
चैत्रे तु मासे ऋक्षे तु चम्पकाराधनं चरेत् । ८

वैशाखमासे ऋक्षे च शतपत्रेण पूजयेत्
ज्येष्ठमासे विशेषेण फलोत्सवविधिं चरेत् । ९

अनूराधे तु विप्रेन्द्रामावास्यां श्रवणेऽपि वा
स्नापयेत्सहस्रकलशैः तदर्धैर्वा तदर्धकैः । १०

अष्टोत्तरशतैर्वापि तन्न्यूनं न समाचरेत्
उक्तद्रव्ययुतैर्वापि केवलं क्षीरमेव वा । ११

घृतं वा केवलं विप्र नालिकेरजलं तु वा
आषाढे मासि मासर्क्षे सहकारफलैर्यजेत् १२

शयनं कारयेद्विप्र चातुर्मास्ये तु पूर्वतः
श्रवणे मासि मासर्क्षे पूजयेत्कदलीफलैः । १३

तन्मासे तु द्वादश्यां पवित्रारोहणं चरेत्
जयन्त्युत्सव मष्टम्यां श्रावणे कृष्णपक्षके । १४

भाद्रपदे मासि ऋक्षे पङ्कजाराधनं चरेत्
आश्वयुजे मासि ऋक्षे श्वेतपद्मैस्समर्चयेत् । १५

तन्मासे तु विशेषेण शयनोत्थापनं चरेत्
कार्तिके मासि मासर्क्षे दीपारोहणमाचरेत् । १६

तन्मासे सकले विप्र वृश्चिकाराधनं चरेत्
मार्गशीर्षे मासि ऋक्षे गन्धालेपन माचरेत् । १७

तन्मासे पूर्वपक्षे तु वेदाध्ययन माचरेत्
अध्ययनोत्सवं कुर्याद्दश वा सप्तकं भवेत्। १८

यद्वा पञ्च दिनं विप्र त्र्यहं वाथ समाचरेत्
विंशद्दिनमथोवापि देवान् सर्वांश्च श्रावयेत्। १९

ब्राह्मणै र्मूर्तिमन्त्रैश्च वेदपारगतैरपि
उत्सवं कारयेन्नित्यं वाहनं निजपूर्वकम्। २०

कुम्भमण्डलहोमं च वर्जयेत्तत्र कर्मणि
पुष्ये मासि च मासर्क्षे हरिद्रालेपनं चरेत्। २१

तन्मासे तु विशेषेण वनभोजन माचरेत्
तिलदानं माघमासे पितॄणां पिण्डमाचरेत्। २२

मासकर्म इति प्रोक्तं तद्विधानं प्रचक्षते
पत्रपुष्पविधौ ब्रह्मन् पवित्रारोपणं चरेत्। २३

फलपूजादिकं विप्र पूरणं सम्यगाचरेत्
गन्धपूजाविधौ ब्रह्मन् लेपनं सम्यगाचरेत्। २४

प्रथमञ्चाङ्कुरं वापि मण्डपालंकृतिं तथा
शुद्धस्नानं तृतीयञ्च चतुर्थे द्वारपूजनम् २५

चतुस्स्थानार्चनञ्चैव पञ्चमं समुदाहतम्।
षष्ठं कौतुकबिम्बं स्यात्ततश्शयनकल्पनम् २६

शयनाधिवासने चैव रक्षा कार्या ततः परम्
प्रातस्स्नानं ततः कुर्यात् कलशैस्स्नपनं भवेत् । २७

द्वारपूजाविधानञ्च चतुस्स्थानार्चनं तथा
निवेदनं बलिश्चैव भूषणारोपणं तथा ।

भूषणारोपणं विप्र पूजायास्संपुटं भवेत्
वेदघोषं ततःश्लोकदानं नीराजनं तथा । २८

गीतं वाद्यं तथा नृत्तं होमद्रव्यबलि र्भवेत्
यात्रोत्सवं ततः कुर्यात् तत्प्रसादप्रदापनम् । २९

पूजावरोहणं चैव पुनः पूजां समाचरेत्
शुद्धस्नानं ततः कृत्वा तथास्थाननिवेशनम् । ३०

दक्षिणां सुप्रदानञ्च इति कर्मक्रमं विदुः
एतत्कर्मक्रमेणैव सर्वकर्माणि कारयेत् । ३१

प्रथमं नाभिमानञ्च द्वितीयश्चोरुमध्यगम्
तृतीयं जानुमानन्तु चतुर्थं पादमानकम् । ३२

पुष्पपत्रपवित्रेषु प्रमाणं परिकीर्तितम्
कुम्भमण्डलकुण्डेषु एतन्मानमुदाहृतम् । ३३

स्थूलमानं तथाप्रोक्तं देवीभ्यां नाभिमानकम्
स्थूलया सङ्गबिम्बानां नाभिमानं प्रशस्यते । ३४

भूषणायुधशक्तीनां तालमानं प्रशस्यते
पूरणेतु विशेषेण मानं वक्ष्यामि सुव्रत । ३५

प्रथमं पीठमानन्तु द्वितीयं जानुमानकम्
तृतीयमूरुमध्यस्थं चतुर्थं कटिमानकम् । ३६

कुम्भमण्डलकुण्डेषु शिवमानेन कल्पयेत्
शिवं शिवद्वयञ्चैव त्रिशिवञ्च चतुश्शिवम् । ३७

केवलं प्रस्थमानेन उपकुम्भे प्रपूरयेत्
मूलबिम्बे विशेषेण पूर्ववन्मानमीरितम् । ३८

वासुदेवादिभिर्मन्त्रैः पूजयेद्देशिकः स्वयम्
बलिकर्मणि विप्रेन्द्र मुष्टिमानं प्रचक्षते । ३९

लेपने तु विशेषेण मानं वक्ष्यामि सुव्रत
आकण्ठस्थानपर्यन्तं प्रथमं परिलेपयेत् । ४०

स्थानान्नाभ्यवधि ब्रह्मन् द्वितीयं परिलेपयेत्
नाभ्या कट्यवधि ब्रह्मन् तृतीयं परिचक्षते । ४१

अक्षात्पादावधि यावत् चतुर्थं परिलेपयेत्
आकण्ठान्नाभिपर्यन्तं देवीभ्यां मानमीरितम् । ४२

पूरणे पादमानं स्यात् अन्येषां पादमानकम् ?
दमनारोपणात्पूर्वं मङ्कुरानर्पयेत् सुधीः । ४३

मण्डपं समलंकृत्य पूर्वेद्युश्च निशामुखे
कुम्भमण्डलकुण्डञ्च कारयेद्विधिचोदितम्। ४४

चक्राब्जमण्डलं कृत्वा भद्रकाख्यमथापि वा
यंत्रमण्डलकं वापि यजमानेच्छया गुरुः। ४५

द्वारादियजनं कुर्यात् पुण्याहं वाचयेत्सुधीः
स्नपनं कारयेद्धीमान् क्षीरादिद्वादशे घटे। ४६

तद्बेरं समलंकृत्य पिष्टरे सन्निवेशयेत्
मण्डपस्य तु पाश्चात्ये कुम्भे संपूजयेद्धरिम्। ४७

मण्डले पूजयेद्देवं नारायणमनामयम्
बिम्बमभ्यर्चयेद्धीमान् होमकर्म समाचरेत्। ४८

निवेदनं ततः कृत्वा तत्तत्स्थाने बलिं क्षिपेत्
कौतुकं तण्डुले न्यस्य नीत्वा धामप्रदक्षिणम्। ४९

भेरीनाद समायुक्तमाधारोपरि विन्यसेत्
देवमभ्यर्च्य चार्घ्याद्यैः बन्धयेद्दक्षिणे करे। ५०

पुनः पूजां ततः कृत्वा अपूपादि निवेदयेत्
दमनाङ्कुरमाहृत्य क्षालयेच्छुद्धतोयकैः। ५१

कदलीत्वविशेषेण दीर्घपत्रे पुरन्ध्रगैः
वरंकारयेद्धीमान् पूर्वोक्तेनैव वर्त्मना। ५२

पृथक् पात्रे निवेश्याथ अधिवासनमाचरेत्
देवमण्डपयोर्मध्ये व्रीहिपीठं समाचरेत् । ५३

तस्योपरि न्यसेत्पात्रं दहनाप्यायनं चरेत्
सौरभेयीं प्रदर्श्याथ पूजयेद्गन्धपुष्पकैः । ५४

किराटाद्यैश्च? मन्त्रैश्च पातयेदपरेण तु
अधिवासजमादाय योजयेत्कुम्भमूर्धनि । ५५

पूजया संपुटीकुर्यात् गीतवाद्यादिकं चरेत्
अधिवासस्रजं ? विप्र नाभिमानं प्रचक्षते । ५६

शयने सन्निवेश्याथ रक्षां कुर्यात्समन्ततः
ततः प्रभाते विमले स्नपनं सम्यगाचरेत् । ५७

अष्टोत्तरशतैर्वापि एकाशीतिघटैस्तु वा
स्नपनार्थं तु देवेशमानयेत्सिंहविष्टरे । ५८

अलंकृत्य यथान्यायं चतुस्स्थानार्चनं चरेत्
कुम्भेन संपूजयेत्पश्चात् किरीटादि चतुष्टयम् ५९

वर्धन्याञ्च ततो दद्यात् पूजया संपुटीकृतः
गीतनृत्तादिकान् सर्वान् दर्शयेद्देवसन्निधौ । ६०

नमस्कृत्य यथान्यायं स्तुत्वा देवं प्रणम्य च
मण्डले योजयेत् पश्चात् कुम्भवद्देशिकोत्तमः । ६१

मण्डलस्थं विशेषेण तत्काले संप्रवेशयेत्
अङ्गानामप्युपाङ्गानां लाजान्तानामपि द्विज । ६२

भूषणानां च शक्तीनां तथा च विहगेशितुः
अर्घ्यादीनान्तु पात्राणां धूपदीपप्रकाण्डकैः । ६३

मूलबेरे यथा कुर्यात् होमकुण्डे तथा भवेत्
एवं कृत्वा विधानेन द्वारस्थानादीनां चरेत् । ६४

आलयाङ्गस्थबिम्बानां चण्डादीनां विशेषतः
एवंविधानसंयुक्तं तत्तद्द्रव्यैर्बलिं क्षिपेत् । ६५

अपराह्ने तु संप्राप्ते यानमारोप्य देशिकः
धामप्रदक्षिणं कृत्वा वीथ्यावरणपश्चिमम् । ६६

मण्डपे सन्निवेश्याथ सन्न्यासं चैव कारयेत्
शुद्धस्नानं ततःकृत्वा दक्षिणां संप्रदापयेत् । ६७

यतीनां ब्राह्मणादीनां प्रसादं परिदापयेत्
यः करोति नरो भक्त्या स याति ब्रह्मणः पदम् ।६८

अश्वमेधाष्टकं पुण्यं वाजपेयत्रयं तथा
सर्वपापक्षयं चैव सर्वोपद्रवनाशनम् । ६९

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
दमनारोपणं नाम द्वाविंशोऽध्यायः

---

# अथ त्रयोविंशोऽध्यायः

भगवान्—

तुलस्यारोपणे चैव दमनारोपणं भवेत्
चम्पकाराधने विप्र तथा कर्म समाचरेत् । १

अङ्कुरार्पणं ततः कुर्यात् तथा वै कौतुकत्रयम्
निशि पूजाविधानञ्च अधिवासञ्च भूषणम् । २

त्रिस्थानयजनं चैव होमकर्मविधि स्तथा
स्नपनं तु विशेषेण नालिकेरजलैर्भवेत् । ३

केवलं गन्धतोये वा तदभावे विशेषतः
अधिवासविधौ ब्रह्मन् सद्यो द्रव्याधिवासनम् । ४

यात्राकाले तु विप्रेन्द्र पुष्पदाम प्रशस्यते
विकिरेत् सर्वतो विप्र पुष्पैर्ग....नैर्यथा । ५

अन्यानि सर्वकर्माणि पूर्ववत्कारयेद्द्विज
चम्पकानामभावे तु पाटलं परिकीर्तितम् । ६

वैशाखे तु विशेषेण सन्न्यासं सम्यगाचरेत्
ब्राह्मणादीनां वर्णानां तत्प्रसादं प्रदापयेत् । ७

स्नपने तु विशेषेण केवलं पुष्पतोयकम्
गन्धोदकमथो वापि नालिकेररसन्तु वा । ८

पत्रपुष्पोत्सवे विप्र भूषणैः परिभूषयेत्
फलोत्सवेषु सर्वेषु पूरणं संप्रकीर्तितम् । ९

गन्धोत्सवेषु सर्वेषु लेपनं सम्यगाचरेत्
अनूराधे विशेषेण फलोत्सवमथाचरेत् । १०

फलोत्सवविधिं वक्ष्ये समासादवधारय
कदलीपनसञ्चाम्रं फलानां संम्प्रकीर्तितम् । ११

त्वजार्क्षसंयुतं न्यूनं बीजपूरन्तु चाक्षतम्
पनसं त्रिविधं प्रोक्तं पनसं क्षुद्रसंज्ञकम् । १२

क्षुद्रंन्तु वर्जयेद्विप्र सर्वदा पूरकर्मणि
कदली त्रिविधं प्रोक्तं त्रिविधं योग्यमेव च । १३

सहकारे तथाप्रोक्तं हारीतं रक्तपीतकम्
त्रिविधं पूरणे योग्यं क्रमुके चन्द्रपूरकम् । १४

हारीतं पीतकं रक्तं पूरणे सर्वकं ? भवेत्
अङ्कुरावाहनश्चैव चतुःस्थानार्चनं तथा । १५

कौतुकन्तु यथा चैव प्रातःस्नपनमेव च
द्वारपूजाविधिश्चैव चतुःस्थानार्चनक्रिया । १६

मूलबिम्बार्चनं चैव नैवेद्यं बलिरेव च
अधिवासदिने विप्र शिवमानेन पूरयेत् । १७

तद्द्रव्येणबलिं कुर्याद्धोमकर्म तथाभवेत्
द्विगुणं त्रिगुणं चैव चातुर्गुण्यन्तदन्तिके। १८

वासुदेवादिभिर्मन्त्रै श्चतुर्वेदाद्यकैस्तु वा
शाखाद्यत्रितयं वापि विष्णुसूक्ततृतीयकम्। १९

अङ्गादीनां विशेषेण मुष्टिमानेन पूरयेत्
श्रियादीनां विशेषेण जानुमानेन पूरयेत्। २०

कर्मार्चादिबिम्बानां पादमानेन पूरयेत्
एकैकं होमकार्ये तु बलिकर्मणि मुष्टिकम्। २१

उत्सवं कारयेदन्ते विकिरेत्फलपूरकैः
मण्डपे सन्निवेश्याथ ततस्सन्न्यासमाचरेत्। २२

पूजापूर्वं ततः कुर्यात् पूर्ववत्परिवापयेत
शुद्धस्नानं ततः कृत्वा गर्भगेहे निवेशयेत्। २३

पनसानामभावे तु सहकारैः प्रपूरयेत्
सहकारफलाभावे मोचकैः परिपूरयेत्। २४

त्रयं त्रिमाने वा विप्र मासमृक्षे समर्चयेत्
श्रावणे मासि विप्रेन्द्र बीजपूराष्टकैर्यजेत्। २५

तदभावे तु विप्रेन्द्र आर्द्रपूगीफलै र्यजेत्
मासेचाश्वयुजे विप्र जलजैः परितो यजेत्। २६

स्नपने तु विशेषेण रजनीनीरमुत्तमम्
चूर्णस्नानयुतं वापि उक्तद्रव्यघटैस्तु वा । ४५

लेपनं पूर्ववत्कुर्यात् अङ्कुरादिक्रियां तथा
इति संक्षेपतः प्रोक्तो मासोत्सवविशेषकः । ४६

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
मासोत्सवविधिर्नाम त्रयोविंशोऽध्यायः

---

## अथ चतुर्विंशोऽध्यायः

श्रीभगवान्—

पवित्रारोपणं वक्ष्ये विस्तरेण तवानघ
चातुर्मासस्य मध्ये वा आदावन्ते च वा भवेत् । १

चातुर्मास्यं त्रिधा प्रोक्तं सौरश्चान्द्रमासं तथा
वैष्णवं च विशेषेण त्रिविधं संप्रकीर्तितम् । २

संक्रान्त्यादिकं सौरं स्यात् चाद्रञ्च प्रथमादिकम्
द्वादश्यादि त्रिकं चैव वैष्णवं परिकीर्तितम् । ३

वैष्णवं चोत्तमं प्रोक्तं मध्यमं सौरमुच्यते
चान्द्रमप्यधमं प्रोक्तं उत्तमे तु समाचरेत् । ४

तस्मात्सर्वप्रयत्नेन द्वादश्यान्तु समाचरेत्
पवित्रकर्महीने तु नित्यपूजा विनश्यति । ५

नित्यपूजाविनाशे तु राष्ट्रं क्षयमवाप्नुयात्
तद्ग्रामोनिधनं ( याति तत्स्थानं नाशनं भवेत्। ६

तस्मात्सर्वप्रयत्नेन पवित्रारोपणं चरेत्
पतनात्त्रायते तस्मात्पवित्रं परिकीर्तितम् । ७

आत्मार्थे वा परार्थे वा पवित्रारोपणं भवेत्
एकबेरे तु वा विप्र बहुबेरे तु वा भवेत् । ८

लेपभित्तिपटस्थे तु कर्मार्चायां समाचरेत्
मण्डपं कारयेद्धीमान् अग्रतः परितोऽपि वा । ९

बहुस्तम्भसमायुक्तं शिलयेष्टकयापि वा
केवलं दारुमात्रं वा प्रपामात्रमथापि वा । १०

भित्तियुक्तमयुक्तं वा कोणभित्तियुतं तु वा
अधिष्ठानान्वितं वापि उपपीठान्वितं तु वा । ११

पादबन्धयुतं वापि प्रस्तरादियुतं तु वा
ज्वालातोरणसंयुक्तं पताकाभिरलंकृतम् । १२

कूटाकारयुतं वापि गरुडेनापिशोभितम्
सिंहयुक्त मयुक्तं वा बहुद्वारयुतं तु वा । १३

भित्तित्रययुतं वापि पञ्च सप्त नवात्मकम्
एवं कृत्वा विधानेन सुधया परिलेपयेत् . १४

चित्रं कुर्या द्विशेषेण अवतारैरनेकशः
तोरणानि चतुर्दिक्षु कारयेद्विजसत्तमः । १५

अश्वत्थं वा वटं वापि प्लक्षं वा बिल्व मेववा
तालं वेणुं तथैवापि कारयेद्विधिचोदितम् । १६

द्वारायामसमं वापि स्तम्भायामसमन्तु वा
आयामर्धेन विस्तीर्णं हस्तमान मथापि वा । १७

क्षुद्रप्रासादकं विप्र हस्तमानेन कारयेत्
शूलत्रयसमायुक्तं गरुडेन समन्वितम् । १८

तोरणे तोरणे कुर्यात् गरुडश्चोर्ध्वसंस्थितम्
गोमयालेपनं कुर्यात् मण्डपाभ्यन्तरस्थलम् । १९

तन्मध्ये वेदिकां कुर्यात् विधिरेवं प्रकीर्तितः
मण्डलं मध्यभागे तु दक्षिणे कुम्भसंस्थितम् । २०

उत्तरे चाग्निकुण्डं स्यात्सौम्येशानान्तरेपि वा
एकैकं पञ्चहस्तं वा चतुर्हस्तं त्रिहस्तकम् । २१

तत्पीठ हस्तमानं वा तालमानमथापि वा
वेदिकोच्छ्रायमानं वा चतुरङ्गुलकं भवेत् । २२

मण्डपस्य तु वेदी तु दर्पणोदरवद्भवेत्
कुम्भवेदीं समां कृत्वा कुण्डं वा पङ्कजाकृति । २३

चतुरश्र मथोवापि चक्राकारमथापि वा
मेखलात्रयसंयुक्तं योनिनाभिसमन्वितम् । २४

तद्बहिश्चाष्टदेशे तु कुण्डं कुर्या द्विचक्षणः
अश्रं योनिं तथा चापं त्र्यश्रं वृत्तं षडश्रकम् । २५

पद्मं वस्वश्रकञ्चैव पूर्वादीनां दिशां क्रमात्
यद्वा चक्रादिकं वापि अष्टकुण्डं प्रकल्पयेत् । २६

चतुष्कुण्डमथो वापि एतन्न्यूनन्नकारयेत्
अश्रं चापं तथा वृत्तं पद्मं पूर्वादितःक्रमात् । २७

वेद्याःपश्चिम भूभागे उत्सवं सन्निवेशयेत्
सिंहासने तु विप्रेन्द्र कल्पद्रुमसुमण्डिते । २८

निश्चलप्रभया युक्तं पुष्पमाल्यैः परिष्कृतम्
श्रीभूमिसहितं देव मासने सन्निवेशयेत् । २९

गरुडं पूर्वदिग्भागे दक्षिणे चक्रमेव च
पश्चिमे वायुपुत्रन्तु विष्वक्सेनं तथोत्तरे । ३०

ध्वजतोरणकुम्भाद्यै द्वारेऽपि च निवेशयेत्
वितानाद्यै रलंकृत्य क्षौमैः कार्पासकैस्तथा । ३१

स्तम्भानां वेष्टनं कुर्यात् रम्भापूगैरलंकृतम् ।
फलै र्नानाविधै श्चैव दीपकुम्भैरलंकृतम् ३२

दर्पणै श्चामरैश्चैव आतपत्रै र्मनोहरैः
घण्टाभिरर्धचन्द्राद्यै र्दर्भमाल्यैरलंकृतम्। ३३

एवंकृत्वा विधानेन पवित्रं वाथ कारयेत्
क्षौमं कार्पासकं वापि स्वर्णसूत्रमथापि वा। ३४

ब्राह्मण्या निर्मितं वाथ क्रीतं चैवापणस्थले
अयुग्मं युग्मं वापि अयुग्मे नवकं भवेत्। ३५

युग्मे द्वादशकं प्रोक्त मष्टौ वापि चतुष्टयम्
प्रक्षाल्य शुद्धतोयेन शोषयेत्प्रणवेन तु। ३६

निर्माणमण्डपे विप्र गोमयालेपनं भवेत्
शङ्कुश्च निखनेद्भूमौ आचार्यो वायुसूत्रकैः। ३७

प्रथमं मुखमानं तु द्वितीयं द्विगुणं भवेत्
तृतीयं त्रिगुणं प्रोक्तं चतुर्थन्तु चतुर्गुणम्। ३८

अष्टोत्तरशतञ्चाद्यं द्वितयं द्विगुणन्तु वा
तृतीयं त्रिगुणं प्रोक्तं चतुर्थन्तु चतुर्गुणं। ३९

यद्वा सहस्रमरकं तदर्धञ्च तदर्धकम्
तदर्धञ्चाद्यकं चैव ग्रन्थयेद्विधिना ततः। ४०

अन्तरान्तरकश्चैव द्विजाण्डसदृशं भवेत्
धात्रीफल समाकारं स्थूलमुक्तासमं भवेत्। ४१

अन्तरान्तरयोगेन ग्रन्थनीयश्च दूरतः
कुम्भमण्डलकुण्डेषु द्वन्द्वमानं प्रकीर्तितम् । ४२

पञ्चकं वेदिमानं स्यात् उपकुम्भेषु चेष्यते
त्रितयं द्वितयं वापि समासं वा समाचरेत् । ४३

प्रथमं नालमानन्तु द्वितीयं द्विगुणं भवेत्
तृतीयं त्रिगुणं ज्ञेयं परिकुम्भे तथैव च । ४४

परिकुम्भेषु विप्रेन्द्र एकमेवाप्यलं भवेत्
करके चास्त्रके विप्र एकं वापि त्रयं भवेत् । ४५

अधिवासे पवित्रं हि आद्यमानं प्रशस्यते
मण्डले कर्णिकामानं केसरेषु तथैव च । ४६

दले दले विशेषेण दलमानं प्रशस्यते
अक्षरेष्वरमानं स्यादरक्षेत्रे तु तत्समम् । ४७

नाभिक्षेत्रे तथा प्रोक्त मरक्षेत्रे तु तत्समम्
नेमिक्षेत्रे-समं प्रोक्तं तृतीये त्रितयं भवेत् । ४८

द्वितीये त्रितयं विद्यात् एके चैव परं भवेत्
चक्राब्जमण्डले स्थित्वा पवित्रारोपणं भवेत् । ४९

बहुचक्रेषु विप्रेन्द्र एकैकं वा त्रयं त्रयम्
कुण्डेषु मेखलामानं एकैकं च पृथक् पृथक् । ५१

एतत्पवित्रकं विप्र यथेच्छाग्रन्थितन्तुभिः
अन्येषु सर्वकार्येषु तालमानं प्रशस्यते। ५१

बिम्बप्रतिसराणां तु मानं तस्य प्रचक्षते
शिरःप्रमाणेनार्चाया भूषणं प्रथमं स्मृतम्। ५२

द्वितीयं जानुमानं तु तृतीयं पादमानकम्
चतुर्थं पीठमानन्तु मूलबेरे तदेव हि। ५३

देवीभ्यान्तु विशेषेण त्रितयं द्वितयन्तु वा
नाभिजानुपदं विप्र तृतीये परिकीर्तितम्। ५४

द्वितीयं .पादन्तु एकं वा जानुपादकम्
भूषणानामायुधानां तालमानं प्रशस्यते। ५५

चण्डादि परिवाराणां मुखमानं प्रकीर्तितम्
बिम्बप्रमाणकं पीठे प्रभामानं तु तद्भवेत्। ५६

बहिःकुण्डेषु विप्रेन्द्र तृतीयं त्रितयं भवेत्
द्वितयं वा मुनिश्रेष्ठ एकैकं वापि कारयेत्। ५७

आचार्या बहवः प्रोक्ता ऋत्विजश्च तथैव च।
परिचारकाश्च बहवः पवित्रारोपणे वरम्। ५८

ऋत्विजो दीक्षिताश्चैव सर्वे च गुणवत्तराः
उपरिष्टात्सुवर्णाद्यैः क्षौमसूत्रैश्च सन्यसेत्। ५९

पूरितं मृद्विलेपेन कुङ्कुमेनानुरञ्जयेत्
पृथक् पात्रे विनिक्षिप्य पुष्पगन्धैश्च साधयेत् । ६०

कुम्भयोग्यानि चैकस्मिन् मण्डले चाग्निनापरे ?
कुण्डयोग्यानि चैकस्मिन् बिम्बयोग्यानि चापरे । ६१

अन्यानि सर्वयोग्यानि एकपात्रे विनिक्षिपेत्
त्रिविधेन सुगन्धेन वासितं गन्धपुष्पकैः । ६२

तत्क्रमं ते प्रवक्ष्यामि अवधारय सांप्रतम्
कर्मारंभदिनात्पूर्वं सप्तमे पञ्चमेऽहनि । ६३

ततोऽङ्कुरार्पणं कुर्यादुत्सवोक्तविधानतः
त्रिवर्गपालिकायां वै अङ्कुरानर्पयेत्सुधीः । ६४

मण्डपं समलंकृत्य तोरणाद्यैरशेषतः
मृद्ग्रहं पूर्ववत्कृत्वा पालिकाः परिपूरयेत् । ६५

अष्टोत्तरशतं चैव उत्तमं परिकीर्तितम्
तदर्धं मध्यमं चैव तदर्धमधमं भवेत् । ६६

षोडशं द्वादशं वापि अष्टकं वा समाचरेत्
पालिकास्यानुरूपेण सूत्रपातं समाचरेत् । ६७

व्रीहिपीठे प्रतिष्ठाप्य सोमकुम्भन्तु विन्यसेत्
बीजपात्रं तथा पूर्वं द्वारपूजां समाचरेत् । •६८

चतुःस्थानार्चनं कुर्यात्पुण्याहमपि वाचयेत्
पवित्राणामर्चनं स्यात्सोमकुम्भस्य पूजनम् । ६९

संपाताज्येन विप्रेन्द्र घृतारोपणमाचरेत्
बीजावापं ततःकुर्यात् बलिं दद्याद्विचक्षणः । ७०

गुह्यस्थाने निवेश्याथ अपरे वासरे यजेत्
एकादश्यान्तु प्राप्तायां धामप्रक्षालनं चरेत् । ७१

उद्धृतोदककुम्भैश्च क्षालये द्रूपवर्जनम् ?
लेपयेच्चन्दनाद्यैश्च बहिरन्तश्च साधकः । ७२

चित्रवेश्मनि विप्रेन्द्र मण्डपं चानुलेपयेत्
अलंकृत्य यथापूर्वं ध्वजतोरणकुम्भकैः । ७३

विचित्रपुष्पमाल्यैश्च मुक्तादामैश्च दर्पणैः
फलै र्नानाविधैश्चैव रम्भापूगगणैस्तु वा । ७४

बहुदीपगणै र्युक्तं फलपुष्पादिभिस्तथा
मध्ये वेदिं विशेषेण मण्डलं कारयेद्बुधः । ७५

पौष्करोक्तप्रकारेण यन्त्रं विष्णु मथापि वा
वासुदेवाख्ययन्त्रं वा सात्वतोक्त मथापि वा । ७६

चक्राब्जं स्वस्तिकं वापि इष्टसिद्धि मथापि वा
वासुदेवाख्ययन्त्रं वा विष्णुयन्त्रं मथापि वा । ७७

तस्य दक्षिणपार्श्वे तु कुम्भं संस्थापयेद्बुधः
महाकुम्भं चोपकुम्भं परिकुम्भञ्च वर्धनीम् । ७८

पालिकां परितः स्थाप्य अष्टमङ्गलकं न्यसेत्
सूत्रवस्त्रसमायुक्तं विधानं कूर्चसंयुतम् । ७९

कुम्भे कुम्भे विशेषेण नारिकेलफलं न्यसेत्
क्रमुकं स्तम्बकं वापि नारिकेलस्य मञ्जरीम् । ८०

नानाविधफलैश्चैव वेदिकोर्ध्वन्तु विन्यसेत्
मण्डपस्योत्तरे पार्श्वे कुण्डं वै वेदिकोपरि । ८१

परिकुम्भं न्यसेद्धीमान् अष्टधान्यानि निक्षेपेत्
कदलीफलवृन्दैश्च नालिकेरकदम्बकैः । ८२

क्रमुकैस्तम्बकैश्चैव पनसाम्रफलैस्तथा
कुम्भे कुण्डे विशेषेण तथैव परिपूजयेत् ८३

वेदिपश्चिमभागे तु उत्सवं सन्निवेशयेत्
सिंहासने समारोप्य परिष्कारे परिष्कृते । ८४

एवं कृत्वा विधानेन द्वारपूजां समाचरेत्
पुण्याहं कारयेद्धीमान् स्नपनं सम्यगाचरेत् । ८५

एकाशीतिघटैर्वापि षट्त्रिंशत्कलशैस्तु वा
गोक्षीरं केवलं वापि नारिकेलरसं तु वा । ८६

स्नपनान्ते विशेषेण चूर्णस्नानं समाचरेत्
शुद्धस्नानं ततः कृत्वा नृसूक्तेनाभिषेचयेत् । ८७

नीराजनं ततः कृत्वा अलंकारासने न्यसेत्
कुम्भेषु मण्डले चैव कुम्भपूजां समाचरेत् । ८८

अनेकै रुपचारैश्च पूजयेद्देवबिम्बवत्
उपकुम्भेषु सर्वेषु षोडशैः परिपूजयेत् । ८९

अस्त्रकुम्भे तथा प्रोक्तं परिकुम्भेत्विदं ? भवेत्
कुम्भमण्डलकुण्डेषु प्रोक्षणस्नान माचरेत् । ९०

अष्टाक्षरेण मन्त्रेण महाकुम्भे तु पूजयेत्
द्वादशाक्षरमन्त्रेण मण्डले तु समर्चयेत् । ९१

विष्णुमन्त्रेण विप्रेन्द्र अग्निस्थं हरिमर्चयेत्
उत्सवे तु विशेषेण गायत्र्या संप्रपूजयेत् । ९२

उपकुम्भे वासुदेवमिन्द्रादीन् परिकुम्भके
मण्डलाराधनं कुर्यात् उपचारै रनेकशः । ९३

पञ्चवर्णसमायोगात् पञ्चतत्वमयं स्मृतम्
पञ्चतत्वमयो विष्णुः पञ्चतत्वमयश्शिवः । ९४

पञ्चतत्वमयो ब्रह्मा पञ्चतत्वमयं जगत्
पञ्चतत्वमयं सर्वं जगद्दृष्टं चराचरम् । ९५

तस्मात्सर्वप्रयत्नेन मण्डलाराधनं परम्
मण्डले पूजयेद्देवं वासुदेवमनामयम् । ९६

पात्रार्चनं पुरा कृत्वा आत्मार्चनमनन्तरम्
पीठार्चनं ततः पश्चात् परिवारार्चनं ततः । ९७

आसनादिनिवेद्यान्तं मण्डलाराधनं परम्
बिम्बे संपूजयेद्देवं उपचारै रनेकशः । ९८

मूलबेरे तथा कुर्यात् प्रधानकुण्डे होमयेत् ?
विष्णुमन्त्रेण मन्त्रज्ञः समिदाज्यचरून् क्रमात् । ९९

दिक्कुण्डे तु विशेषेण ऋत्विजै र्होममाचरेत्
ऋत्विजामप्यभावे तु आचार्यस्स्वयमाचरेत् । १००

पालाशं खादिरश्चैव बिल्वमौदुम्बर न्तथा
प्लक्षन्यग्रोधापामार्गमश्वत्थंसमिदष्टकम् ? १०१

पूर्वादीशानपर्यन्तं समिधः परिकीर्तिताः
पायसं.कृसरश्चैव हरिद्रान्नञ्च मौद्गिकम् । १०२

माषान्नं तिलशुद्धान्नं दध्यन्न मथचाष्टकम्
लाजनीवारकौ चैव तिलस्सर्षप एव च। १०३

व्रीहिमाषयवाश्चैव गोधूमश्चाष्टमं भवेत्
अष्टकुण्डेषु होतव्यं तद्द्रव्यै स्तु पृथक् पृथक् । १०४

पवित्राधिवासनं कुर्यात् देवस्य पुरतः स्थले
मार्गत्रयं ततः कृत्वा धान्यराशिं विनिक्षिपेत् । १०५

तदर्धं तण्डुलश्चैव तदर्धं तिलमेव च
तस्योपरि न्यसेत्पात्रं पीठवत्परिपूजयेत् । १०६

ततो भूषणपात्राणि विन्यसेन्मन्त्रवित्तमः
प्रोक्षणादिक्रियास्सर्वाः कारयेन्मन्त्रवित्तमः । १०७

प्रोक्षणं ताडनं दाहमुत्पाटापूरणं तथा ?
लोहकारमृत्तिकाभि र्भोगिकालश्च पूजनम् ? १०८

सांस्पर्शश्चेति दशधा सर्वभोगेषु संस्कृतिः ?
संपाताज्येन मन्त्रज्ञः सेचयेच्छास्त्रवित्तमः । १०९

गन्धानुलेपनं कुर्यात् धूपद्रव्यैश्च धूपयेत्
गन्धपुष्पेषु निक्षिप्य स्थापयेदम्बरेण तु । ११०

पुनः पूजां ततः कृत्वा कौतुकं बन्धयेत्सुधीः
मूलबिम्बे तथा बध्वा आचार्यस्य च बन्धयेत् । १११

पूर्वोक्तेन तु मार्गेण शयने सन्निवेशयेत्
गीतनृत्तपुराणाद्यैः रात्रिशेषं नयेद्द्विजः । ११२

ततः प्रभाते विमले नित्यकर्म समाचरेत्
स्नानवेद्यां समारोप्य स्नपनं सम्यगाचरेत् । ११३

अष्टोत्तरशतैः कुम्भैरेकाशीतिघटैस्तु वा
युक्तद्रव्ययुतै र्वापि केवलं क्षीरमेव वा । ११४

सर्वं घृतमयं वापि नालिकेरजलं तु वा
पूर्ववत्स्नपनं कृत्वा नीराजनावसानकम् । ११५

अलङ्कारासने नीत्वा अलङ्कारै रलंकृतैः
सिंहासने निवेश्याथ श्रीभूमिसहितं विभुम् । ११६

द्वारादियजनं कृत्वा कुम्भमण्डलपूजनम्
होमकर्म ततः कृत्वा मूर्तिहोमं समाचरेत् । ११७

निवेदनबलिं दद्याद्भूषणानि समर्चयेत्
भूषणं पात्रमादाय कुम्भपार्श्वे समानयेत् । ११८

पवित्र योजनकाले प्रोक्षणादिदिशं चरेत्
पवित्रं नीत्वा पाणिभ्यां गन्धालेपनमाचरेत् । ११९

धूपयित्वा विशेषेण अग्निसन्धान माचरेत्
अव्यक्तं सात्विकं चैव मन्त्रं विग्रहमेव च । १२०

योगचिन्त्यमनव्यक्तं? तात्विकं तत्वचिन्तनम्
किरीटादीन् समावाह्य भूषणे भूषणे प्रति । १२१

अर्घ्यपाद्यै स्समभ्यर्च्य योजयेत्कुम्भमूर्धनि
संहिताद्यैश्चतुर्भिस्तु कुम्भे संपुजयेद्धरिम् । १२२

शाखाद्यै र्मण्डलैः प्रोक्तमारणाद्यैस्तु बिम्बकैः
अनुवाकत्रयेणैव विष्णुसूक्तेन कुण्डकैः । १२३

कुम्भे चाष्टाक्षरेणैव मण्डयेद् द्वादशाक्षरम्
बिम्बे च विष्णुगायत्र्या कुण्डे चैव षडक्षरम् । १२४

भूषणै र्भूषणैश्चैव अर्घ्याद्यै स्संप्रपूजयेत्
अर्घ्यं पाद्यं तथाचामं गन्धं पुष्पं च धूपकम् । १२५

ताम्बूलं तत्क्रमाद्दद्यात् भोजनान्तै स्तु तैः क्रमात्?
दीपं नीराजनश्चैव वेदं श्लोकं तथैव च । १२६

गीतं नृत्तं च वाद्यं च दानं वै स्वर्णवस्त्रगैः
स्तोत्रश्चैव नमस्कारं बिम्बमण्डलके तथा । १२७

उपकुम्भेषु सर्वेषु वासुदेवादिमन्त्रतः
वारूणादिनिर्ऋत्यन्तं योजयेन्मन्त्रवित्तमः । १२८

त्रितयं द्वितयं वापि एकैकं वा यथेच्छया
रक्षां कुम्भेषु सर्वेषु पूर्वादिक्रमयोगतः । १२९

एकमेवाप्यलं प्रोक्तं वस्त्रकुम्भे त्रयं द्वयम्
अष्टमण्डलके पश्चात्पालिकायामनन्तरम् । १३०

पायसान्नं निवेद्याथ सूक्तेनैव बलिं क्षिपेत्
मण्डले च तथा कुर्यात् विशेषमधुनोच्यते । १३१

पञ्चक्षेत्रे अरे विप्र पश्चिमादि समायजेत्
पश्चिमे द्वारदेशे तु योजयेद्भूषणादि वै । १३२

अन्यानि सर्वकर्माणि पूर्ववत्तु समाचरेत्
बिम्बे संपूजयेत् पश्चात् कमलं पूर्ववद्भवेत् । १३३

चतुष्टयं प्रदद्यात्तु अङ्गादीनाञ्च योजयेत्
अङ्गानामप्युपाङ्गानां लाञ्छनानामपि द्विज । १३४

भूषणानां च शक्तीनां तथैव विहगेशितुः
पीठपादुकपात्राणां धूपदीपादिकं ततः १३५

आचार्यसाधकानां च वाहनानां तथैव च
गीतवादित्रपात्राणां शङ्खादीनां तथैव च । १३६

वेदं गीतं च वाद्यञ्च दीपं नीराजनं परम्
पायसादिनिवेद्यान्तं ताम्बूलञ्च निवेदयेत् । १३७

मूर्तिबिम्बे तथा कुर्याद्धोमकुण्डे तथैव च
उपचारादि सर्वेषा माज्येनाहुतिं हुवेत् । १३८

ऊर्ध्वादिमेखलानां च तत्पात्राणां तथैव च
परिकुण्डेषु सर्वेषु पूर्वादिक्रमयोगतः । १३९

त्रितयं द्वितयं वापि एकं वापि नियोजयेत्
पूर्वोक्तद्रव्यनिचये होमं कुर्याद्विचक्षणः । १४०

देवीनां कर्मबिम्बानां तत्तत्पात्रे नियोजयेत्
स्तोत्रैः स्तुत्वा मुनिश्रेष्ठ विकिरेत्पुष्पजालकैः । १४१

यात्रोत्सवं तथा कुर्यात् अपराह्णे तु देशिकः
नैकैः परिकरै र्युक्तं बहुदीपसमन्वितम् । १४२

नवाहश्चैव सप्ताहं पञ्चाहं त्रितयं तथा
एकाहं वापि विप्रेन्द्र पूर्वं संकल्पमाचरेत् । १४३

यथाचोत्सववत्कुर्यात् वाहनारोहणं विभोः
समाप्तिदिवसे रात्रौ ततस्सन्न्यासमाचरेत् । १४४

पूजनं पूर्ववत्कुर्यात् प्रायश्चित्ताहुतिं हुवेत्
शुद्धस्नानं ततः कृत्वा आलयं संप्रवेशयेत् । १४५

आरोपितपवित्राणि आचार्य स्स्वयमाचरेत्
द्विजादि सर्ववर्णानां भक्तानां भावितात्मनाम् । १४६

पवित्रकगणं तद्वत् दापयेच्च पृथक् पृथक्
पवित्रधारणाद्विप्र सर्वपापहरं भवेत् । १४७

सर्वयज्ञफलं चैव सर्वतीर्थफलं भवेत्
अपरेऽहनि संप्राप्ते तीर्थपार्श्वं समानयेत् । १४८

तीर्थदेशं समासाद्य तीर्थस्नानं समाचरेत्
यथा अवभृतं कुर्यादुत्सवेन सहैव हि १४९

गोभूहिरण्यवस्त्राद्यै राचार्य स्संप्रदापयेत्
आलयं संप्रविश्याथ मण्डपे सन्निवेशयेत् । १५०

विष्वक्सेनं समभ्यर्च्य गर्भगेहे निवेशयेत्
आचार्यं पूजयेत्पश्चात् रत्नहेमाङ्गुलीयकैः । १५१

गोभूहिरण्यवस्त्राद्यै राचार्यं संप्रपूजयेत्
तदर्धमृत्विजाश्चैव यथाचोत्सववद्भवेत् । १५२

सर्वशक्तिकरं सर्वं मुख्यं साधनमुत्तमम्
राज्ञो राष्ट्रस्य सुखदमायुरारोग्यवर्धनम् । १५३

प्रजानां वासुदेवस्य पवित्राराधनं परम्
पवित्राराधनं विष्णोः श्रद्धया च करोति यः । १५४

स याति ब्रह्मणः स्थानं विष्णुसायुज्यमुत्तमम्
सर्वपापविनिर्मुक्त स्सर्वदुःखविवर्जितः । १५५

विशेषवचनं वक्ष्ये शृणु गुह्यं महामुने
यथाश्वमेधं विप्राणां राजसूयश्च भूभुजाम् । १५६

यथास्वधा पितॄणां च सुराणाममृतं यथा
नराणां जाह्नवीतोयं देवानामच्युतो यथा । १५७

तथा हि देवदेवस्य पवित्राराधनं परम्
अधिवासनकाले तु प्रासादपरिवेष्टनम् । १५८

पञ्चरंगेण सूत्रेण उक्तसूत्रेण ? वा भवेत्
मण्डपञ्च तथावेष्टय तथा भूषणपात्रकम् । १५९

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
पवित्रारोहणं नाम चतुर्विंशोध्यायः

## अथ पञ्चविंशोऽध्यायः

श्रीभगवान्—

संवत्सरोत्सवं वक्ष्ये श्रोतुमिच्छसि चेच्छृणु
विषुवद्वितयश्चैव तथा चैवायनद्वयम् । १

जयन्तीकृत्तिका चैव आग्रायणविधिस्तथा
अध्ययनोत्सवश्चैव पवित्रारोहणं तथा । २

अब्दपूजाविनाशे तु मासपूजा विनश्यति
मासपूजाविनाशे तु नित्यपूजा विनश्यति । ३

नित्यपूजाविनाशे तु राजा राष्ट्रं विनश्यति
तस्मात्सर्वप्रयत्नेन उक्तं कर्म समाचरेत् । ४

श्रावण्यां कृष्णपक्षे तु अष्टम्यां रोहिणीयुते
जयन्ती नाम सा प्रोक्ता जयत्यशुभमित्यसौ ५

बुधवारसमायुक्तं सर्वदोषविवर्जितम्
तिथिनक्षत्रयोगे वा केवलं ऋक्षकेऽपि वा । ६

पूर्वेद्युरङ्कुरं कृत्वा कौतुकं बन्धयेद्बुधः
तद्रात्रौ स्नपनं कुर्यात् कलशैः पञ्चविंशकैः । ७

उक्तद्रव्ययुतं वापि केवलं क्षीरमेव वा
घृतं वा केवलं विप्र नालिकेरजलं तु वा । ८

द्वारादियजनं कृत्वा कुम्भमण्डलकं यजेत्
केवलं कृष्णमन्त्रेण जयाख्यं मण्डलं भवेत् । ९

परमान्नं तथावापि भूतावास मथापि वा
होमकार्यं ततः कृत्वा शयने सन्निवेशयेत् । १०

शयनं बालवत्कृत्वा मृद्वास्तरणभूषितम्
यद्वा पूर्वं प्रपूज्याथ चूर्णस्नानं तथैव च । ११

पायसं चैव मुद्गान्नं फलं नानाविधं तथा
जम्बुकाख्य फलञ्चैव विशेषेण निवेदयेत् । १२

कृष्णबिम्बस्याभावे तु लब्धबिम्बे समाचरेत्
तदभावे तु मूले स्याच्चतुःस्थानसमन्वितम् । १३

तद्दिने समुपोष्याथ तत्पूजान्ते तु पारणम्
निवेदनस्य पूर्वं तु चन्द्रपूजां समाचरेत् । १४

चन्द्रभूमौ विशेषेण गोमयालेपनं भवेत्
सुधाचूर्णै रलंकृत्य चन्द्रमण्डल मालिखेत् । १५

पाद्मतन्त्रोक्तमार्गेण पौष्करोक्त मथापि वा
अर्धचन्द्र मथोवापि मा लिखेत्साधकोत्तमः। १६

संकल्पं पूर्ववत्कृत्वा प्राणायाम मथाचरेत्
न्यासं कृत्वा विधानेन पात्रार्चनमथाचरेत्। १७

आसनावाहनश्चैव अर्घ्यं पाद्य मनन्तरम्
आचामं गन्धपुष्पं च धूपं दीपं तथैव च। १८

स्तोत्रं नीराजनश्चैव पायसान्नं निवेदयेत्
फलं नानाविधं चैव सोममन्त्रेण देशिकः। १९

रात्रौ जागरणं कृत्वा प्रातःकाले महोत्सवम्
वीथीश्च समलंकुर्या त्तोरणानां बहु न्यसेत्। २०

शिक्ये शिक्ये विशेषेण दधिक्षीरघटान् न्यसेत्
तोरणे तोरणे बध्वा प्रहरेद्देवसन्निधौ। २१

कृष्णबिम्बं समारोप्य शिबिके पुष्पनिर्मिते
प्रथमावरणमारभ्य वीथ्यावरणपश्चिमम्। २२

आनयेत्सर्ववाद्यैश्च वेदघोषैश्च देशिकः
नैकैः परिकरैश्चैव छत्रचामरसंकुलैः। २३

क्रीडायन्त्रगणै श्चैव तैलचूर्णप्रदायकैः
एवं नीत्वा विधानेन मण्डपे सन्निवेशयेत्। २४

शुद्धस्नानं ततः कृत्वा स्वस्थाने सन्निवेशयेत्
एकाहं च त्र्यहं चैव पञ्चसप्तनवाहकम् । २५

उत्सवं कारयेन्नित्यं मध्याह्ने वापराह्णके
एवं यः कारयेद्भक्त्या भुक्तिमुक्ती भजेन्नरः । २६

बहुकन्याफलञ्चैव बहुगोदानजं फलम्
बहुधर्मफलं चैव लभते नात्रसंशयः । २७

कृत्तिकादीपोत्सवः—

कृत्तिकोत्सवविधिं वक्ष्ये समासा न्मुनिपुङ्गव
कृत्तिकापर्वयुग्मेन दीपारोपणमाचरेत् । २८

ऋक्षयुक्तमयुक्तं वा केवलं पर्वमेव वा
मध्याह्ने समनुप्राप्ते स्नपनं सम्यगाचरेत् । २९

अङ्कुरं पूर्ववत् कृत्वा कर्मारम्भे तु कौतुकम्
षट्त्रिंशत्कलशैर्वापि पञ्चविंशतिभि स्तु वा । ३०

यद्वा सप्तदशै र्वापि युक्तद्रव्ययुतैस्तु वा
क्षीरं वा गोघृतं वापि गन्धतोयमथापि वा । ३०

चूर्णस्नानं ततः कृत्वा अलंकारासने नयेत्
कञ्चुकाद्यै रलंकृत्य लिप्तं मृगमदेन च । ३२

मूलमूर्तिं विशेषेण अलंकारै रलंकृतम्
मण्डपे सन्निवेश्याथ चतुःस्थानार्चनं चरेत् । ३३

महाहवि र्निवेद्याथ अपराह्ने विशेषतः
दीपाधिवासनं कृत्वा देवमण्डपमध्यमे । ३४

मार्गत्रयं ततः कृत्वा धान्यराशिं विनिक्षिपेत्
नवानिपात्राण्यादाय गोघृतेनैव पूरयेत् । ३५

सूत्रवर्तिं विनिक्षिप्य मध्ये संस्थाप्य देशिकः
तद्बाह्ये परितश्चाष्टौ शरावान् विन्यसेत् क्रमात् । ३६

इन्द्रादीशानपर्यन्त माज्यवर्तिसुसंयुतम्
दीपपात्रञ्ज्वलित्वाथ पात्रवर्तिषु योजयेत् । ३७

अर्घ्यगन्धादिभिश्चैव अर्चयेदग्निमन्त्रतः
पूर्वाद्यष्टशरावेषु इन्द्रमन्त्रादिकैर्यजेत् । ३८

सर्ववाद्यादिसंयुक्तं क्ष्वेलनाभिरलंकृतम्
देशिकः पात्रमादाय विष्णुहस्ते प्रदर्शयेत् । ३९

सायाह्ने समनुप्राप्ते दीपारोपण माचरेत्
द्वारे द्वारे प्रतिष्ठाप्य दीपदण्डान् विशेषतः । ४०

क्रमुकं नालिकेरञ्च तालं वेणुं तथैव च
चम्पकन्देववृक्षञ्च वक्रकोटरवर्जितम् । ४१

तक्षयित्वा ऋजुं विप्र स्तूपिमानप्रमाणतः
तदर्धं द्वारमानं वा शततालायतन्तु वा । ४२

अशीति तालमिच्छन्ति केचित्तस्यार्धमेव वा
प्राकारस्य बहिर्विप्र अष्टदिक्षु समन्ततः । ४३

दीपदण्डान् प्रतिष्ठाप्य तत्तद्दीपं प्ररोपयेत्
पात्रस्थं पूर्वदिग्दण्डे योजये द्वाद्यसंयुतम् । ४४

पुण्याहं वाचयेत्पूर्वे तांस्तान्दण्डान् प्रपूजयेत्
प्रासादे गोपुरे चैव प्राकारे मण्डपे तथा । ४५

तीर्थदेशे नवोद्याने कूपदेशे विशेषतः
श्रियादिमन्दिराद्येषु परिवारालयेषु च । ४६

दीपारोपं ततः कुर्याद्देवदेवस्य सन्निधौ
गृहे गृहे तथा कुर्यात् गमयेत्सर्ववीथिकाः । ४७

मण्डपं संप्रविश्याथ समारोप्य च विष्टरे
नृत्तगीतादिकं सर्वं दर्शयित्वा विशेषतः । ४८

पुनः पूजां तथा कृत्वा पृथुकादि निवेदयेत्
अपूपादि विशेषेण दापयेत्सर्वजन्तुषु । ४९

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
जयन्तीकृत्तिकोत्सवविधानन्नाम पञ्चविंशोऽध्यायः

## अथ षड्विंशोऽध्यायः

श्रीभगवान्—

नीराजनविधिं वक्ष्ये देवदेवस्य शार्ङ्गिणः
कृत्तिकादिवसाद्ब्रह्मन् न परेद्यु र्निशामुखे। १

देवदासीगणान् सर्वान् सर्वालङ्कारशोभितान्
महानसद्वारमासाद्य दीपान्प्रज्वालयेद्बहून्। २

सर्वे पात्रकरा विप्र गच्छेयु र्देवसन्निधौ
श्रेणिबद्धा स्तथा सर्वे गीतवाद्यपुरस्सरम्। ३

मण्डपं समलंकृत्य आनयेन्मण्डपान्तरे
औत्सवं बिम्ब मादाय विष्टरे सन्निवेशयेत्। ४

श्रीभूमिसहितं देव मलंकारै रलंकृतम्
महानृत्तं दर्शयित्वा देवं नीराजनं चरेत्। ५

सहस्रं वा तदर्धं वा तदर्धं वापि देशिकः
शतं वापि तदर्धं वा तदर्धं वापि कारयेत्। . ६

सर्वपात्रकराश्चैव तिष्ठेयु र्देवसन्निधौ
आचार्यस्समलंकृत्य उत्तरीयोष्णीपभूषणैः। ७

देवस्य दक्षिणे पार्श्वे आसने तु समाविशेत्
अर्घ्यादि पात्राण्यभ्यर्च्य प्राणायामपुरस्सरम्। ८

आत्मार्चनं ततः कृत्वा देवदेवं समर्चयेत्
दीपार्चनं ततः कृत्वा वेदान् संश्रावयेद्बुधः । ९

दीपकुम्भं समादाय आधारोपरि विन्यसेत्
दीपकुम्भं समभ्यर्च्य देवमिष्ट्वा विशेषतः । १०

षडङ्गन्यासं कृत्वा तु भ्रामयेद्देवमूर्धनि
दक्षिणं पादमारभ्य वामपादं तु पश्चिमम । ११

वाद्यमङ्गलसंयुक्तं गीतमङ्गलसंयुतम्
योषित्करात्समादाय पात्रमादाय देशिकः । १२

भ्रामयेद्देवदेवस्य मुखमध्ये विसर्जयेत्
पात्रे पात्रे विशेषेण अर्घ्यपुष्पै स्समर्चयेत् । १३

पुनः पात्रं समादाय प्रादक्षिण्येन मन्दिरम
गीतवाद्यादिसंयुक्तं बलिपीठाद्बहिः क्षिपेत् । १४

नृत्तादि दर्शयन् दास्यः देवस्य पुरतःस्थितः
पूजयित्वा च देवेश मपूपादि निवेदयेत् । १५

उत्सवं बिम्बमारोप्य याने नीत्वा प्रदक्षिणम्
अन्तरावरणमारभ्य वीथ्यावरणपश्चिमम । १६

शुद्धस्नानं ततः कृत्वा गर्भगेहे निवेशयेत्
नीराजनविहीने तु सर्वकर्मासुरं भवेत् । १७

अध्ययनोत्सवः—

अध्ययनोत्सवं वक्षे संक्षेपेण मया श्रुतम्
पूजनं त्रिविधं प्रोक्तं तन्त्रेऽस्मिन् परमेष्ठिना । १८

मानसं कायिकश्चैव वाचिकं त्रिविधं भवेत्
मानसं ध्यानमित्युक्तं कायिकं कर्म उच्यते । १९

वाचिकं स्तोत्रमित्युक्तं तन्त्रेऽस्मिन् विष्णुना पुरा
वेदान्नास्त्यपरं स्तोत्रं तस्माद्वेदांस्तु श्रावयेत् । २०

अङ्कुरं पूर्ववत्कृत्वा पश्चात्प्रतिसरं बुधः
मार्गशीर्षमासे तु एकादश्या मुपक्रमेत् । २१

दशम्यां कौतुकं कुर्यात् तत्पूर्वे चाङ्कुरार्पणम्
संकल्पं पूर्वतः कृत्वा पञ्चाहं दशाहं तु वा । २२

मण्डपे देवमारोप्य भक्तिबिम्बं निवेशयेत्
तथा भक्तजनै र्युक्तं वेदान् संश्रावयेत्सुधीः । २३

महाहवि र्निवेद्याथ अपूपादि निवेदयेत्
यात्रापूर्वं ततः कुर्यात् वाहनानि तु पूर्ववत् । २४

समाप्तिदिवसे प्राप्ते विष्वक्सेनं समर्चयेत् ॥

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां (नीराजन) अध्ययनोत्सवविधानं नाम षड्विंशोध्यायः

# अथ सप्तविंशोऽध्यायः

भगवान्—

आग्रयणविधिं वक्ष्ये अवधारय सांप्रतम्
पुष्यमासे सिते पक्षे पुण्यवारदिने मुने। १

पुण्य नक्षत्रके वापि पूर्वं चैवाङ्कुरार्पणम्
तृतीये पञ्चमे वापि दिने लवन माचरेत्। २

सर्वैः परिकरै स्साधं क्षेत्रदेशं समाचरेत्
मारुतिं वा वैनतेयं विष्वक्सेन मथापि वा। ३

आरोप्य शिबिकां ब्रह्मन् यजमानेन देशिकः
क्षेत्रदेशं समासाद्य पुण्याहं वाचयेत्सुधीः। ४

क्षेत्रं धरणिमन्त्रेण गन्धाद्यैः परिपूजयेत्
शङ्कुलां प्रोक्षयित्वा तु बलिं दद्यात्समन्ततः। ५

पायासान्नेन विप्रेन्द्र लवनं सम्यगाचरेत्
खलं पुरातनं कृत्वा प्रहरेत्तु कृषीवलैः। ६

कौतुकं बन्धयेत् धीमान् कर्षकैस्सह देशिकः
कर्षिणीं शिरसि स्थाप्य गच्छेयुर्देवतालयम्। ७

फलै र्नानाविधै र्युक्तं शङ्खवाद्यादिसंयुतम्
देवस्य सन्निधौ स्थाप्य पुनः पूजां समाचरेत्। ८

देवस्य दक्षिणे हस्ते धान्यं किञ्चित् प्रदर्शयेत्
वृक्षपादेन विप्रेन्द्र मानयित्वा विचक्षणः । ९

दापयेत् सर्ववर्णानां देवदेवस्य सन्निधौ
शोधयेत्तु विशेषेण धान्यराशिं विनिक्षिपेत् । १०

आतपे शोषयेत् सर्वानवघातं समाचरेत्
तत्स्थानं लेपनं कृत्वा सुधाचूर्णैश्च मण्डयेत् । ११

उलूखलं मुसलञ्चैव क्षालयित्वा तु देशिकः
अभ्यर्च्य गन्धपुष्पैरुलूखले धान्यकं क्षिपेत् । १२

अवघातंद्विजवरै स्तथा मङ्गलगायकैः
देवदासीगणैर्वापि विविधै र्ब्राह्मणै स्तु वा । १३

तुषानपोह्य शूर्पेण क्षालयेत् शुद्धवारिणा
शोधयित्वा पुनः सर्वान् गुलपाकेन मिश्रितान् । १४

मरीचिजीरकै र्युक्तान् पूरयेत् देवसन्निधौ
मण्डपे देवमारोप्य श्रीभूमिसहितं द्विज । १५

चतुस्स्थानयुतं वापि केवलं बिम्बमेव वा
निवेदयित्वा देवेशं मूलबिम्बे तु पूजयेत् । १६

बलिहोमं ततः कृत्वा विष्वक्सेनं निवेदयेत्
दापयेत् सर्ववर्णानां विप्रादीनां विशेषतः । १७

मुहूर्ते शोभने प्राप्ते परमान्नं निवेदयेत्
आग्रयणविशेषेण अश्वमेधफलं भवेत् । १८

तस्मात् सर्वप्रयत्नेन तस्मिन्कर्मणि योजयेत्
लोपयेद्यदि सम्मोहात् धान्यनाशो भवेद्ध्रुवम् । १९

विषुवद्वितये विप्र तथा चैवायनद्वये
स्नपनं कारयेद्धीमान् अङ्कुरार्पणपूर्वकम् । २०

पूर्वेद्युः कौतुकं कुर्यात् चतुस्स्थानार्चनं तथा
शयनाधिवासनं कृत्वा प्रातःकाले समुद्धरेत् । २१

नित्यकर्म ततः कृत्वा द्वारादियजनं चरेत्
कुम्भमण्डले संपूज्य बिम्बे स्नपनमाचरेत् । २२

एकबेरशिलाचेत्तु तत्रैव स्नपनं चरेत्
बहुबेरे विशेषेण स्नपनं कौतुकं चरेत् । २३

तदभावे तु विप्रेन्द्र उत्सवे स्नपनं चरेत्
अष्टोत्तरशते वापि एकाशीतिघटैस्तु वा । २४

एकोनार्धशते वापि षट्त्रिंशत्कलशैस्तु वा
पञ्चविंशघटै वापि यद्वा सप्तदशैर्घटैः । २५

एकद्रव्ययुतं वापि बहुद्रव्ययुतं तु वा
कलशाधिवासनं चैव पूर्वरात्रे तु वा भवेत् । २६

रात्रौ चेत्स्नपनं विप्र तत्काले वाऽधिवासयेत्
पूर्वोक्तेन बहुद्रव्य मेकद्रव्यं घृतं भवेत् । २७

क्षीरं वा केवलं विप्र नालिकेरजलं तु वा
पञ्चद्रव्ययुतं वापि पञ्चगव्ययुतं तु वा । २८

पत्रं पुष्पं फलश्चैव द्रव्यत्रयमुदाहृतम्
पञ्चद्रव्यैर्विशेषेण पञ्चगव्यं प्रशस्यते । २९

चूर्णस्नानं ततः कृत्वा शुद्धवारिष्वनन्तरम्
नीराजनं ततः कुर्यात् मण्डनासनमानयेत् । ३०

अलंकृत्य यथान्यायं निवेद्यान्तं समर्चयेत्
पूर्णाहुतिं ततः कृत्वा गर्भगेहे निवेशयेत् । ३१

उत्सवंबिम्बमादाय यात्रां सम्यक् समाचरेत्
गजे वा स्यन्दने वापि शिबिकायां समाचरेत् । ३२

यात्रान्ते देवमादाय मण्डपे सन्निवेशयेत्
दर्शयित्वा च नृत्तादीन् हविरन्तं प्रपूजयेत् । ३३

गर्भगेहे निवेश्याथ दक्षिणां दापयेद्बुधः
वर्णानां ब्राह्मणादीनां कलशं प्रतिदापयेत् । ३४

ये पिबन्ति हरेस्तीर्थं गङ्गातोयसमं पिबेत्
ये वहन्ति शिरोभिस्स्वैर्गङ्गास्नानसमं भवेत् । ३५

इति संक्षेपतः प्रोक्तो वत्सरोत्सवविधिः परम् ॥

इति श्री पाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
संवत्सरोत्सवविधिर्नाम सप्तविंशोऽध्यायः

---

## अथ अष्टाविंशोऽध्यायः

श्री भगवान्—

पुष्ये मासि च मासर्क्षे रजनीस्नानमाचरेत्
अङ्कुरं कौतुकं कृत्वा मण्डपालंकृतिं तथा । १

द्वारपूजाविधिं चैव चतुस्स्थानार्चनं तथा
स्नपनं शयनं चैव अधिवासं तथा भवेत् । २

सकलं पूर्ववत्कृत्वा पूर्वकर्मवदाचरेत्
रजनीसारमादाय पेषयेद्गन्धसंयुतम् । ३

पात्रे पात्रे विनिक्षिप्य पूर्ववच्चाधिवासयेत्
अधिवासनवेलायामाकण्ठाच्चरणावधि । ४

कुम्भमण्डलकुण्डेषु मुष्टिमात्रेण लेपयेत्
ततः प्रभाते विमले गन्धवत् परिलेपयेत् । ५

पूजया संपुटीकुर्यात् लेपनं सम्यगाचरेत्
प्रथमं नाभिमानं तु द्वितीयं कटिमानकम् । ६

तृतीयं जानुमानं तु चतुर्थं पादमानकम्
देवीभ्यां नाभिमानं तु प्रभापीठं विलेपयेत् । ७

कुम्भमण्डलकुण्डेषु प्रथमं मुष्टिमानकम्
द्वितीयं द्विगुणं चैव तृतीयं त्रिगुणं भवेत् । ८

तुर्यं चतुर्गुणं प्रोक्तं मूलबिम्बे तु पूर्ववत्
अन्येषु सर्वकार्येषु तथा शेषेषु पूर्ववत् । ९

अन्ते महोत्सवं कुर्यात् संस्थाने संनिवेशयेत्
मासार्धे न तु पश्चार्धे तिलदानं समाचरेत् । १०

अङ्कुरादिक्रियास्सर्वाः पूर्ववत् सकलं भवेत्
तिलदानं ततःकृत्वा ब्राह्मणेभ्यो विशेषतः । ११

तिलमिश्रितपिण्डेन पितृदानं समाचरेत्
माघमासे तु मासर्क्षे पितृपूजां समाचरेत् । १२

पात्रालाभे विशेषेण पाटलैः परिपूजयेत्
पत्रं पुष्पं फलं तोयं गन्धालेपं तु पूर्ववत् । १३

इति श्री पाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
तिलदानविधिर्नाम अष्टाविंशोऽध्यायः

---

## अथ ऊनत्रिंशोऽध्यायः

श्रीभगवान्—

विशेषयजनं वक्ष्ये समासादवधारय
दुर्निमित्ते तु सञ्जाते तथा दुःस्वप्नदर्शने । १

अनावृष्टिभवे चैव अतिवृष्टिभवे तथा
ग्रहयुद्धे च सञ्जाते कुहूदोषसमायुते । २

ग्रहदोषे समुत्पन्ने तथा राजभये बुधः
परचक्रप्रवेशे तु व्याधीनां पीडने तथा । ३

एवं दोषस्य शान्त्यर्थं केशवाराधनं चरेत्
संकल्पं पूर्ववत्कृत्वा कौतुकं बन्धयेद्बुधः । ४

शुक्रवारे शुभदिने स्नपनं सम्यगाचरेत्
घटैस्सप्तदशैर्वापि द्वादशैर्वा तथा नवैः । ५

एकाङ्गं वा त्र्यङ्गं वाथ पञ्चाङ्गं वापि कारयेत्
एकाङ्गश्चैव क्षीरं स्याद्घृतं वा गन्धमेव वा । ६

पत्रं पुष्पं फलश्चैव त्र्यङ्गं तत्परिकीर्तितम्
पञ्चाङ्गं पञ्चगव्यं च पञ्चामृत मथापि वा । ७

दधिक्षीरं मधुचैव शर्करासर्पिरेव च ।
पञ्चामृतमिति प्रोक्तं तन्त्रेऽस्मिन् परमेष्ठिना । ८

एतैस्स्नानं ततः कुर्यात् पूजायां संपुटीभवेत्
चूर्णस्नानं ततः कृत्वा मन्त्रस्नानं समाचरेत्। ९

अनुवाकत्रयंचैव भूसूक्त्या सूक्तमेव च
द्वादशं वारमावृत्य स्नपनं सम्यगाचरेत् । १०

एकं त्रयं तथावापि पञ्चसप्तनवाथवा
यथाविधि समभ्यर्च्य महाहविर्निवेदयेत् । ११

श्रीभगवान् —

संप्रोक्षणविधिं वक्ष्ये तथाचैवावधारय
अदीक्षितस्पर्शने च अस्पृश्यस्पर्शने तथा । १२

जनने मरणे चैव उदक्या चैव दूषिते
चण्डालाद्यैश्च विप्रेन्द्र श्वसृगालखरादिभिः । १३

स्पर्शने मन्दिरे चैव देवबिम्बे तथा भवेत्
पूजने चिरलुप्ते च खननेचाग्निदाहने । १४

अन्तस्स्रवे विशेषेण गर्भगेहे समन्ततः
दूषिते चैव जनिते युद्धे च जनसंकुले ? १५

चोरादिभि स्समायुक्ते चलने पतनेऽपि वा
तन्त्राणां संकरे चैव तथा शास्त्रस्य संकरे । १६

अमन्त्रपूजने चैव तथा त्वस्थानपूजने
अनाचारार्चने चैव तथा विधुरपूजने । १७

काणार्चने विशेषेण कुष्ठापस्मारगर्हितैः
स्पर्शने देवबिम्बे तु मन्दिरे दूषिते तथा । १८

संप्रोक्षणनिमित्ते तु प्रोक्षणं सम्यगाचरेत्
अङ्कुरं कौतुकं चैव स्नपनं कुम्भपूजनम् । १९

चतुस्स्थानार्चनञ्चैव तथावै शयनक्रिया
निवेदनं बलिश्चैव कुम्भप्रोक्षणमेव च । २०

सद्यश्च सकलं कुर्यात शास्त्रदृष्टेन वर्त्मना
दिने बहुविशेषेण पूर्वेद्युश्चाङ्कुरं भवेत् । २१

कौतुकं च तथा प्रोक्तं तथा वै शयनक्रिया
दक्षिणासंप्रदानं च उत्सवं तदनन्तरम् । २२

द्विजानां भोजनं चैव धान्यदानं तथैव च
इति सङ्क्षेपतः प्रोक्तः संप्रोक्षणविधिः परम् । २३

इति श्रीपाञ्चरात्र महोपनिषदि अनिरुद्धसंहितायां
संप्रोक्षणविधिर्नाम ऊनत्रिंशोऽध्यायः

## अथ त्रिंशोऽध्यायः

श्री भगवान्—

प्रायश्चित्तमथो वक्ष्ये अवधारय सांप्रतम्
शुद्धं त्रिविधमाख्यातं वाङ्मनःकायकर्मणाम्। १

वाक्छुद्धिश्च ऋतं प्रोक्तं मानसं विष्णुचिन्तनम्
कायिकं कर्म देवस्य त्रिविधं शुद्धमुच्यते। २

साधके स्नानहीने तु सर्वं निष्फलतां भवेत्
मन्त्रस्नान मशक्तश्चेत् तीर्थतोयं तु वा पिबेत्। ३

सन्ध्योपासनहीने तु प्राणायामशतं जपेत्
नित्यपावकहीने तु द्विजभोजनमाचरेत्। ४

शास्त्रमन्त्रक्रियाहीने सर्वकार्यं मनर्थकम्
तस्मात् सर्वप्रयत्नेन कारयेत् शास्त्रवर्त्मना। ५

मन्त्रहीने तु विप्रेन्द्र साधकस्तु विनश्यति
द्रव्यहीने विशेषेण तत्कर्ता नाशयेद्ध्रुवम्। ६

क्रियाहीने द्विजश्रेष्ठ तद्ग्रामो निधनो भवेत्
द्रव्यमन्त्रक्रियायुक्तं तत्कार्यं सफलं भवेत्। ७

द्रव्याणामप्यलाभे तु मन्त्रैरेव समर्चयेत्
द्रव्यालाभे तु पुष्पं स्यात् पूष्पालाभे तु चेतसा। ८

श्रद्धाभक्तिविहीने तु सर्वं वै निष्फलं भवेत्
मण्डपे गर्भगेहे तु वल्मीकादिसमुद्भवे । ९

तद्देशं खातयित्वा तु मृद्भिरन्यैः प्रपूरयेत्
शान्तिहोमं ततः कृत्वा तिलैराज्यै र्विशेषतः । १०

अग्निदाहे विशेषेण पुनस्सन्धानमेव च
बिम्बे दोषसमायुक्ते पुनरुत्पादयेत् सुधीः । ११

प्रतिष्ठां पूर्ववत् कृत्वा ततःपूजां समाचरेत्
चोराद्युपहते तत्र तथैव सम्यगाचरेत् । १२

नद्यादिजलवेगेन चलनं संभवेद्यदि
स्थापयेद्देवदेवेशं बिम्बञ्चान्यत्र देशिकः । १३

वत्सरत्रितयादूर्ध्वं ग्रामादी ... चालयेत् ?
चालयेद्यदि संमोहात् राजराष्ट्रधनक्षयः । १४

तस्मात् सर्वप्रयत्नेन चलनं न तु कारयेत्
आवरणाच्चलनाच्च राजा चैव विनश्यति । १५

प्रासादगोपुरादीनां पतने चलने सति
स्नपनं शान्तिहोमं च चतुःस्थानार्चनं तथा । १६

एकाहञ्च त्र्यहश्चैव पञ्चसप्तनवाहकम्
गुरुलाघवयोगेत्वा सर्वं चैव समाचरेत् ? १७

आदित्यस्पर्शने वापि प्रोक्षणेन विनश्यति
उदक्या स्पर्शने चापि स्नपनं सम्यगाचरेत्। १८

दूषिते श्वसृगालाद्यैश्शान्तिहोमं समाचरेत्
क्षयकुष्ठाद्यपस्मारस्पर्शिते देवबिम्बके। १९

एकाशीतिक्रमेणैव स्नपनं द्विजभोजनम्
दीपपूजाविहीने तु रात्रौ द्विगुणमर्चनम्। २०

एकरात्रविहीने तु परे द्विगुणमाचरेत्
द्वितीयदिवसान्ते तु प्रायश्चित्तं विधीयते। २१

स्नपनं द्वादशघटैश्शान्तिहोमं समाचरेत्
वत्सरादूर्ध्वतो विप्र प्रतिष्ठां सम्यगाचरेत्। २२

चतुर्थाहात्समारभ्य यावन्मासावधि द्विज
पूजाहीने तु विप्रेन्द एवमादिक्रमात् चरेत्। २३

पुण्याहं शान्तिहोमं च स्नपनं द्विजभोजनम्
पुनःपूजाविधिं चैव ततः प्रभृति नित्यशः। २४

मासद्वयविहीने तु संप्रोक्षणविधिं चरेत्
तदूर्ध्वं तु च विप्रेन्द्र चतुःस्थानार्चनं चरेत्। २५

सप्ताष्टमासादूर्ध्वे तु तिलहोमं समाचरेत्
वत्सरादूर्ध्वतो विप्र प्रतिष्ठां सम्यगाचरेत्। २६

एवमादिक्रियाहीने सर्वकर्मासुरं भवेत्
जलवासाक्षिमोक्षं च वर्जयित्वा समाचरेत् । २७

कर्षणादि क्रियाहीने सर्वकर्मासुरं भवेत्
प्रवेशबलिहीने तु तत्कर्म विफलं भवेत् । २८

शङ्कुस्थापनहीने तु स्थाननाशो भवेद्ध्रुवम्
बीजावापनहीने तु बीजनाशो भवेद्भुवि । २९

गर्भन्यासविहीने तु तत्क्षेत्रं शून्यतां वहेत्
अङ्कुरार्पणहीने तु अनर्थ माशुभावहम् । ३०

जलवासविहीने तु कर्तृनाशो भवेद्ध्रुवम
अक्षिमोक्षविहीने तु अक्षिनाशो भवेद्ध्रुवम् । ३१

स्नपनस्य विहीने तु वास्तुहानि र्भविष्यति
होमकर्मविहीने तु सर्वकार्यं विनश्यति । ३२

मण्डलाराधने हीने तत्कर्म विफलं भवेत्
स्थापनस्य विहीने तु पुनःस्थापनमाचरेत् । ३४

कर्माण्यादौ प्रतिष्ठार्थं यः कुर्यात् देशिकोत्तमः
स एव सकलं कर्म कुर्यात् प्राज्ञोऽपि नेतरः । ३४

आचार्यस्य च सांकर्ये राजा राष्ट्रं विनश्यति
नद्यादिजलवेगेन चालनं यदि संम्भवेत् । ३५

नगरग्रामधामादि निर्बाधेऽन्यत्र कल्पयेत्
कल्पनं पूर्ववत्कुर्यात् मानादि द्विजसत्तम। ३६

बिम्बं च तादृशं कुर्यात् ग्रामादीनपि तादृशः
निमित्तं पूर्वमालोक्य सुनिमित्ते तु कारयेत्। ३७

दुर्निमित्ते तु संप्राप्ते शान्तिहोमं समाचरेत्
सौदर्शनेन मन्त्रेण नारसिंहेन वा भवेत्। ३८

वास्तुपूजां ततः कृत्वा पायसान्नबलिं क्षिपेत्
द्विजानां भोजनं कुर्यात् शङ्कुस्थापन माचरेत्। ३९

शङ्कोः पूर्वापराभागे छायया बिन्दुमालिखेत्
छायाग्रवशेनैव दिक्परिच्छेदमाचरेत्। ४०

खननञ्च ततः कृत्वा सिकतैः परिपूरयेत्
हस्तपादैर्दृढीकृत्य तोयैः स्सिञ्चेच्छिलोपरि। ४१

मानाङ्गुलि प्रमाणेन धामादि परिकल्पयेत्
उपपीठयुतं वापि अधिष्ठानं तु कल्पयेत्। ४२

पङ्क्तिकोर्ध्वे विशेषेण गर्भन्यास मथाचरेत्
ग्रामस्य ग्राममध्ये ? वा नगरे च तथैव च। ४३

एतत्कर्मविहीने तु तत्कर्म विफलं भवेत्
तस्मात् सर्वप्रयत्नेन तत्तत्कर्म समाचरेत्। ४४

द्विजानां भोजनेनैव सर्वं संपूर्णतां नयेत्
पाञ्चरात्रोक्तमार्गेण ग्रामादि परिकल्पयेत् । ४५

पाञ्चरात्रप्रभावेण सर्वदोषो विनश्यति
कर्षणादिक्रियास्सर्वाः पाञ्चरात्रेण कारयेत् । ४६

नित्यक्रियाविहीने तु पवित्रारोपणं चरेत्
पवित्रारोपणे हीने मासपूजा विनश्यति । ४७

मासपूजाविहीने तु नित्यपूजा विनश्यति
नित्यपूजाविहीने तु ग्रामनाशो भविष्यति । ४८

नित्यपूजाविहीने तु सर्वशान्तिं समाचरेत्
पञ्चाहञ्च त्र्यहञ्चैव सप्ताहञ्च नवाहकम् । ४९

आदौ संकल्प्य विप्रेन्द्र चतुःस्थानार्चनं चरेत्
स्नपनं प्रत्यहं कुर्यात् द्विजभोजनमेव च । ५०

दक्षिणा संप्रदाने तु सर्वदोषो विनश्यति
दानेन दह्यते सर्वं तस्माद्दानं विशिष्यते । ५१

धर्मेण लभ्यते सर्वं तस्माद्धर्मं विशिष्यते
दानधर्मद्वयाच्चैव विष्णोराराधनेन च । ५२

लभ्यते हि विशेषेण नात्र कार्या विचारणा ॥

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
प्रायश्चित्तविधिर्नाम त्रिंशोऽध्यायः

## अथ एकत्रिंशोऽध्यायः

श्री भगवान्—

गर्भन्यासविधिं वक्ष्ये समासादवधारय
देवानां ब्राह्मणादीनां गर्भन्यासो विधीयते । १

ग्राममध्ये विशेषेण देवानामालये तथा
पाञ्चरात्रपरेणैव गर्भन्यासं समाचरेत् । २

अन्यथा दोषमाप्नोति शिल्पिना सह देशिकः
तालमानप्रमाणेन गर्भभाजन माचरेत् । ३

तन्मानेन च लोकेन विधानं परिकल्पयेत्
शिलयेष्टकया वापि नवगर्तं प्रकल्पयेत् । ४

मुहूर्ते शोभने प्राप्ते रात्रौ गर्भं विधीयते
अधिवासं ततःकुर्यान् तत्क्रमस्ते प्रवक्ष्यते । ५

स्नानकार्यं ततः कृत्वा अलंकृत्य यथाविधि
अङ्कुरानर्पयित्वा तु कौतुकं बन्धयेत् पृथक् । ६

स्नपनं कारयेद्धीमान् घटैस्सप्तदशैः क्रमात्
पुण्याहं कारयेद्धीमान् वाससा परिवेष्टयेत् । ७

धान्यराशिं विनिक्षिप्य तदर्धं तण्डुलं न्यसेत्
तिलं तदर्धं निक्षिप्य नववस्त्रैः परिस्तरेत् । ८

अभ्यर्च्य गन्धपुष्पाद्यै मन्त्रेणैव तु देशिकः
गर्भपात्रं समादाय शाययेच्छयनोपरि । ९

तस्य दक्षिणपार्श्वे तु कुम्भं संस्थापयेद्बुधः
देवं देवीं समावाह्य पूजयेत् शास्त्रवर्त्मना । १०

गर्भद्रव्यं समादाय विन्यसे द्भक्तमध्यतः
रत्नंलोहन्तथाधातुः बीजमूलगणांस्तथा । ११

अष्टमृद्भि र्विशेषेण ब्रह्मादीशानके न्यसेत्
संपाताज्यं समासिच्य पूजयेत् पूर्ववर्त्मना । १२

संभवेतु विधानेन तत्रैव परिवेष्टयेत्
होमं कुर्याद्यथान्यायं बलिं दद्यात् समन्ततः । १३

मुहूर्ते शोभने प्राप्ते विन्यसे द्गर्भभाजनम्
समुद्रपरिधानीये पर्वतस्तनमण्डिते । १४

समस्तभुवनाधारे देवीगर्भसमाश्रयः
सचिह्नैर्लोहजैश्चैव माल्यादिगणसंयुतम् । १५

तद्गर्तं पूरयेत्पश्चान्नृत्तवाद्यसमन्वितम्
सिकतैस्तोयपूरैश्च तथागुणिशिलागणैः । १६

गर्भविन्यासकाले तु स्वस्तिकै स्संप्रपूजयेत्
आचार्यं पूजयेत् पश्चात् वस्त्रहेमाङ्गुलीयकैः । १८

शिल्पिनं पूजयेत् पश्चात् धनधान्यगवादिभिः
गर्भविन्यासहीने तु तद्ग्रामो निधनो भवेत्। १९

तस्मात् सर्वप्रयत्नेन गर्भन्यासं समाचरेत्
सर्वमष्टाक्षरेणैव द्वादशाक्षरेणैव वा। २०

पुंसूक्तेनैव मन्त्रेण स्नपनं कारयेद्बुधः
श्रीसूक्तेनैव मन्त्रेण गर्भभाजनमाचरेत्। २१

षडक्षरेण मन्त्रेण होमं कुर्याद्विचक्षणः
मन्त्रतन्त्रविहीने तु सर्वं कर्मासुरं भवेत्। २२

सुदर्शनेन मन्त्रेण रक्षां कुर्यात् समन्ततः
हेतीशं स्वर्णमन्त्रेण गर्भस्थाने विनिक्षिपेत्। २३

इन्द्रादीशानदेवांश्च स्वस्थाने संप्रपूजयेत्
इति सम्यक् समाख्यातो गर्भन्यासविधिः परम्। २४

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
गर्भन्यासविधिर्नाम एकत्रिंशोऽध्यायः

## अथ द्वात्रिंशोऽध्यायः

श्रीभगवान्—

बलिपीठप्रतिष्ठा च वक्ष्यतेऽद्य महामुने
प्रासादं गर्भगेहं च प्रतिमापीठमेव च । १

शरीरमेव देवस्य स्थितमेव चतुष्टयम्
द्वारावरणदेवानां बलिपीठान्तमेव हि । २

शिलालोहादिभिः क्लृप्तैः छायामूर्तिः प्रतिष्ठिता
तत्तन्मन्त्रेण मन्त्रज्ञः प्रतिष्ठायां विशेषतः । ३

देवस्याज्ञानुरूपस्य परिवारगणस्य च
शयनासनयानानि स्थानादीनि विशेषतः । ४

सर्वसामान्यसंयुक्तं प्रतिष्ठायां विधीयते
प्रासादेष्वनुरूपेण अग्रतश्च विभोस्तथा । ५

यथावकाशं वामे वा दक्षिणे वाथ पश्चिमे
मण्डपं कल्पयित्वा तु षोडशस्तंभसंयुतम् । ६

चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्
द्वारकुम्भोपसंयुक्तं दर्भमालापरिष्कृतम् । ७

मध्ये नवपदं वेदि मेकहस्तोच्छ्रितानम्
परितश्च चतुर्दिक्षु चतुष्कुण्डं प्रकल्पयेत् । ८

अश्रं चापं तथा वृत्तं पद्मं पूर्वादितः क्रमात्
एककुण्डमथो वापि चतुरश्रं तु पूर्वके । ९

मण्डपं कारयित्वा तु प्रतिष्ठोक्तविधानतः
प्रतिष्ठादिवसात्पूर्वं अङ्कुरार्पण माचरेत् । १०

तृतीयेऽहनि वा कुर्यात् कर्मारम्भदिनं प्रति
सप्रश्चेत्तण्डुलैः पुष्पैः बीजैर्वा सांकुरै स्तथा । ११

प्रतिष्ठादिवसात्पूर्वं जलवासं प्रकल्पयेत्
दर्पणे कूर्चसंयुक्तं कुम्भेष्ववाह्य आचरेत् । १२

जलद्रोण्यां कटाहे वा समुद्धृत्य माहाजलम्
एकरात्रमथो वापि अहोरात्र मथापि वा । १३

घटिकात्रयसंयुक्तं जलमध्येऽधिवासयेत्
जलवासविधिश्चैव प्रतिष्ठाशास्त्रचोदितम् । १४

स्नपनं कल्पयित्वा तु एकाशीतिक्रमेण तु
नयनोन्मीलनं कृत्वा मृदालेपं ततः क्रमात् । १५

शयनं कल्पयित्वा तु कूर्चे देवेन संस्मरेत
वेदिमध्ये विनिक्षिप्य शालिं तत्र विनिक्षिपेत् । १६

भारद्वयसमायुक्तं तदर्धं तण्डुलं तिलम्
तन्मध्ये स्थापयेत् कुम्भं करकं परिकुम्भकम् । १७

अष्टमङ्गलसंयुक्तं पालिकाभि रलंकृतम्
बलिपीठं समासाद्य प्रपां चैव प्रकल्पयेत् । १८

शिल्पिभि र्निर्मितं पीठं शास्त्रदृष्टेन वर्त्मना
शोधिते बलिपीठे तु क्षालयेत् शुद्धवारिणा । १९

प्रज्वालिते दर्भपुञ्जैः पर्यग्निकरणे कृते
पञ्चगव्येन संप्रोक्ष्य स्नापयेन्नवकेन तु । २०

वाससा परिवेष्ट्याथ अर्चयेत्तु यथाक्रमम्
द्वारयागं ततःकुर्यात् मण्डलं परितःक्रमात् । २१

वेदिकापश्चिमे भागे आसने तु समाविशेत्
प्राणायामं ततः कृत्वा मन्त्रन्यासं समाचरेत् । २२

अर्घ्यादिकल्पनं कुर्यात् प्रोक्षयेद्वेदिकां तथा
मूलबेरे समावाह्य विष्णुपार्षददेवतान् । २३

कुम्भमध्ये समावाह्य सकलीकृत्य भावयेत्
विष्णुपार्षदमन्त्रस्य न्यासं कृत्वा विशेषतः । २४

अर्चयित्वा यथान्यायं इन्द्रादीन् परितो न्यसेत्
कुण्डपार्श्वं समासाद्य होमकर्म समाचरेत् । २५

उल्लेखनादि संस्कारं पूर्ववत्क्रमयोगतः
समिदाज्यचरूणां तु विष्णुपार्षदमन्त्रतः । २६

प्रत्येकं शतमष्टौ च प्रायश्चित्ताहुतिं चरेत्
घृतेन मधुना दध्ना षायसेन यथाक्रमम् । २७

चतुर्दिक्षु ततो हुत्वा समिदादि यथाक्रमम्
अश्वत्थोदुम्बरप्लक्षन्यग्रोधांश्च यथाक्रमम् । २८

उक्ताभावे च सर्वत्र पालाशसमिध स्तथा
विष्णुपार्षदमन्त्रेण चतुष्कुण्डे यथाक्रमम् । २९

प्राच्यां कुण्डे तु जुहुयात् तत्वहोमं समाचरेत्
हविर्निवेदयेत पश्चात् बलिदानं समाचरेत् । ३०

मण्डपादिबहिर्वासात् बलिपीठान्तमेव च
भोजयेत् ब्राह्मणानां च द्वादशाष्टौ यथाबलम् । ३१

मण्डपे शाययित्वा तु नृत्तवाद्यसमन्वितम्
प्रभाते सम्यगुत्थाय स्नात्वा जप्त्वा यथाविधि । ३२

नित्यपूजां समारभ्य मण्डपे कुम्भमर्चयेत्
हविर्निवेदयेत् पश्चात् होमकर्म समाचरेत् । ३३

समिदाज्यचरूणां तु प्रत्येकं षोडशाहुतीः
तें ततो हुत्वा पञ्चोपनिषदैः क्रमात् । ३४

बलिं च सर्वतो दद्यात् तोरणोद्वासनं चरेत्
द्वारकुम्भं समादाय परिकुम्भे नियोजयेत् । ३५

मुहूर्ते शोभने प्राप्ते आचार्यो ब्राह्मणै स्सह
स्थापितं कुम्भमादाय प्रादक्षिण्येन मन्दिरम् । ३६

नृत्तगीतादिसकलवाद्यघोषेण घोषयेत्
पीठपार्श्वं समासाद्य पुण्याहं तत्र कारयेत् । ३७

अर्चयेत् गन्धपुष्पाद्यैः बलिपीठे यथाक्रमम्
कूर्चेन तोयमादाय प्रोक्षयेत् पीठमूर्धनि । ३८

विष्णुपारिषदीशस्य भावयेद्बलिपीठके
परिकुम्भेन संप्रोक्ष्य अष्टमङ्गलदर्शनम् १ ३९

हविर्निवेदयेत् पश्चात् षडङ्गन्यासमाचरेत्
बलिं च सर्वतो दद्यात् बलिपीठे निवेशयेत् । ४०

विष्णुपारिषदीशस्य बलिपीठे विभावयेत्
देवेशस्येशभूतस्य विष्णुपारिषदीशकम् । ४१

आचार्यं पूजयेत् पश्चात् ऋत्विजामपि दक्षिणाम् १
इति संक्षेपतः प्रोक्ता प्रतिष्ठा बलिपीठके । ४२

इति श्रीपाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
बलिपीठप्रतिष्ठापनविधिर्नाम द्वात्रिंशोऽध्यायः

## अथ त्रयस्त्रिंशोऽध्यायः

भृगुः—

विष्वक्सेनस्य देवस्य प्रतिष्ठा विहिता पुरा
तद्विधानं विशेषेण वदानुग्रहकाम्यया । १

श्रीभगवान्—

विष्वक्सेनप्रतिष्ठायाः लक्षणं वक्ष्यतेऽधुना
देवाग्रे मण्डपं कृत्वा यथापूर्वमशेषतः । २

दिग्विदिग्गर्भिते वापि देशे मण्डपकल्पनम्
तृतीयेऽहनि वा कुर्यात् अङ्कुरार्पणपूर्वकम् । ३

प्रतिष्ठादिवसात् पूर्वं जलवासं प्रकल्पयेत्
जलवासक्रियास्सर्वाः प्रतिष्ठाशास्त्रचोदिताः । ४

नयनोन्मीलनं कृत्वा स्नपनादि समाचरेत्
शयनं कल्पयित्वा तु द्वारयागं समाचरेत् । ५

वेदिमध्ये तु संस्थाप्य महाकुम्भं तु विन्यसेत्
विष्वक्सेनं समासाद्य कुम्भमध्ये विशेषतः । ६

परिकुम्भैस्तथा दिक्षु इन्द्रादीनि यथाक्रमम्
अष्टमङ्गलसंयुक्तं पालिकाभि स्समर्चयेत् । ७

इन्द्रादीनि चतुर्दिक्षु अग्निकुण्डं यथाक्रमम्
एककुण्डमथो वापि चतुरश्रं तु कल्पयेत् । ८

उल्लेखनादि संस्कार मग्निबीजं समर्चयेत्
अष्टोत्तरशतं हुत्वा समिदाज्यचरून् क्रमात्। ९

विष्वक्सेनस्य मन्त्रेण आज्याहुतिं यथाक्रमम्
शान्तिहोमं ततः कृत्वा पूर्वोक्तेन विधानतः। १०

प्रायश्चित्ताहुतिं चैव पञ्चोपनिषदैश्शतम्
तिलशालियवोन्मिश्र माज्यमिश्रं च होमयेत्। ११

विष्वक्सेनस्य मन्त्रेण अष्टोत्तरशताहुतीः
तत्र होमं प्रकुर्वीत तत्वन्यासं समाचरेत्। १२

हविर्निवेदयेत् पश्चात् बलिदानपुरस्सरम्
मण्डपेशानभागे तु दर्भेषु परिशाययेत्। १३

प्रभाते विमले शुद्धे नित्यपूजां समाचरेत्
कुम्भे संपूजयेद्देवान् निवेदनपुरस्सरम्। १४

कुण्डपार्श्वे समासाद्य होमकर्म समाचरेत्
समिदाज्यचरूणां तु प्रत्येकं षोडशाहूतीः। १५

प्रायश्चित्ताहुतीश्चैव तिलं शालिं शताष्टकम्
पूर्णाहुतिं ततो हुत्वा शास्त्रदृष्टेन वर्त्मना। १६

मुहूर्ते समनुप्राप्ते ब्राह्मणानामनुज्ञया
स्थापितं कुम्भमादाय प्रोक्षयेद्देवमूर्धनि। १७

विष्वक्सेनस्य मन्त्रस्य प्रणवादि नमोन्तकम्
न्यासं कृत्वा यथान्यायं षडङ्गन्यासमाचरेत्। १८

हविर्निवेदयेत् पश्चात् देवभोज्यं निवेदयेत्
आचार्यं पूजयेत् पश्चात् यथावित्तानुसारतः। १९

इति संक्षेपतः प्रोक्तं विष्वक्सेनप्रतिष्ठितम्॥

इति श्री पाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां
विष्वक्सेनप्रतिष्ठा नाम त्रयस्त्रिंशोऽध्यायः

## अथ चतुस्त्रिंशोऽध्यायः

श्री भगवान्—

भक्तप्रतिष्ठां वक्ष्येऽहं विस्तरेण महामुने
दारूलोहशिलादीनि निर्मितानि यथाक्रमम्। १

प्रतिष्ठायां विशेषेण भक्तानां च यथाक्रमम्
मण्डपं कल्पयित्वा तु देवाग्रे तु विशेषतः। २

यथाभिमतदेशेषु मण्डपं कल्पयेत्पुरा
अङ्कुरार्पणपूर्वं तु तृतीयेऽहनि वा भवेत्। ३

जलवासं तु संकल्प्य प्रतिष्ठाशास्त्रचोदितम्
प्रदोषे अधिवास्यैव मलंकृत्य विशेषतः। ४

लेपमृण्मयभित्तिस्तु....पटस्येवा च दर्पणे ?
स्नपनं कल्पयित्वा तु द्वारयागं समाचरेत् । ५

कुम्भपूजासमायुक्तं प्रतिष्ठाशास्त्रचोदितम्
भक्तबिम्बस्य नामानि प्रणवादि नमोन्तकैः । ६

मन्त्रमेतत्प्रकुर्वीत तत्तद्भावं च भावयेत्
अर्चयित्वा यथान्यायं प्रतिष्ठाशास्त्रचोदितम् । ७

हवि र्निवेदयेत् पश्चात् होमकर्म समाचरेत्
चतुष्कुण्डेषु वै कुर्यात् एककुण्डे तु पूर्ववत् । ८

समिदाज्यचरूणां तु प्रत्येकं शतसंख्यया
भक्तनाम्ना च मन्त्रेण स्वाहान्तेन च होमयेत् । ९

तत्वहोमं प्रकुर्वीत तत्वन्यासं समाचरेत्
शान्तिहोमं ततः कृत्वा मधुरादि यथाक्रमम् । १०

हवि र्निवेदयेत् पश्चात् कुम्भादीनि यथाक्रमम्
बलिं.च सर्वतो दद्यात् चरुशेषं तु भक्षयेत् । ११

मण्डपे शाययित्वा तु जठरं तु विशेषतः
प्रभाते विमले शुद्धे नित्यपूजां समाचरेत् । १२

हवि र्निवेदयेत् पश्चात् होमकर्म समाचरेत्
समिदाज्यचरूणां तु प्रत्येकं षोडशाहुतीः । १३

पूर्णाहुतिं च जुहुयाच्छास्त्रदृष्टेन वर्त्मना
मुहुर्ते समनुप्राप्ते ब्राह्मणानामनुज्ञया । १४

स्थापितं कुम्भमादाय प्रोक्षयेत् स्वस्वविद्यया
भक्तनामानि मन्त्राणि प्रणवादिनमोन्तकैः । १५

स्थापयित्वा यथान्यायं षडङ्गन्यासमाचरेत्
शठकोपादिभक्तानां स्थापनं समुदाहृतम् । १६

आचार्यं पूजयेत् पश्चात् यथावित्तानुसारतः
इति सम्यक् समाख्यातं भक्तमूर्तिप्रतिष्ठितम् । १७

इति श्री पाञ्चरात्रे महोपनिषदि अनिरुद्धसंहितायां

भक्तप्रतिष्ठानाम चतुस्त्रिंशोऽध्यायः

अनिरुद्धसंहिता समाप्ता

श्रीयतिराज सम्पत्कुमार रामानुज मुनिभिः
प्रत्यवेक्षिता

विक्रयाय सिद्धाः ग्रन्थाः



(नागरलिपिः)

| | | |
|---|---|---|
| १. | तापसवत्सराजनाटकम् अनङ्गहर्षमातृराजकृतम् | २ ० ० |
| २. | शृङ्गारप्रकाशः ३६ प्रकाशात्मकः- श्रीभोजदेवकृतः तत्र [२२·२३·२४] प्रकाशाः | ३ ० ० |
| ३. | काश्यपसंहिता सर्पविषचिकित्सा-प्रतिपादिका | ३ ० ० |
| ४. | श्रीपौष्करसंहिता श्रीपाञ्चरात्रागम ग्रन्थः | ५ ० ० |
| ५. | अनिरुद्ध संहिता | ५ ० ० |
| ६. | सद्विद्याविजयम् | १ ८ ० |
| ७. | विजयमङ्गलदीपिका | २ ० ० |
| ८. | रघुवंशकाव्य पदावलिः | १· ० ० |

[आन्ध्र लिपिः]

.. श्रीपाञ्चरात्रागमे--पाद्मसंहितायां

| | | | |
|---|---|---|---|
| ,, पूर्वभागः | १० | ० | ० |
| ,, उत्तर भागः | २५ | ० | ० |
| . अष्टश्लोकी श्रीपराशरभट्टारक कृता सव्याख्या | ० | ८ | ० |

Edited by Sree Yadavadri
ᐱMPATHKUMARA RAMANUJA MUNI
OF MELKOTE, MYSORE.

| | | | |
|---|---|---|---|
| **Tapasa Vatsaraja**: by Anangaharshamatru Raja. An important Dramatic work. | 2 | 0 | 0 |
| **Sringara Prakasha**: by Bhoja Deva. An important literary work | 3 | 0 | 0 |

ᐳANCHARATRA AGAMA GRANTHA.

| | | | |
|---|---|---|---|
| **Kasyapa Samhita**: A work on the Nature of Serpents and other poisonous creatures, their poisons and their cures | 3 | 0 | 0 |
| **Sri Poushkara Samhita**: | 5 | 0 | 0 |
| **Anirudha Samhita**: | 5 | 0 | 0 |

## VEDANTHA GRANTHA

| | | | |
|---|---|---|---|
| Sadvidya Vijayam | 1 | 8 | 0 |
| Vijayamangala Deepika | 2 | 0 | 0 |
| Raghuvamsa Kavya Padavali | 1 | 8 | 0 |

## IN ANDHRA LIPI

| | | | | |
|---|---|---|---|---|
| Pancharatra Padma Samhita in two parts. | Part I | 10 | 0 | 0 |
| ,, | ,, II | 15 | 0 | 0 |

Ashtasloki:

| | | | |
|---|---|---|---|
| by Parasara Bhattaraka with commentary | 0 | 8 | 0 |

## MSS. Ready to Press.

1. Kantakodhara. 2. Alankara Sarvasva Vidyachakravarti Commentary. 3. Viswa- Samhita in two volumes. 4. Narada ita. 5. Vishvaksena Samhita in two 6. Markandeya Samhita. 7. Bhargava ita. 8. Narayana Samhita. 9. Viha- a Samhita. 10. Vishnutantra Samhita o vol. etc. etc.

# ಆರ್ಯಸಂಸ್ಕೃತಿ ಗ್ರಂಥರತ್ನಮಾಲಾ
# ಕನ್ನಡ ಗ್ರಂಥಗಳು

## ಮುದ್ರಿತವಾಗಿರುವ ಗ್ರಂಥಗಳು.

| | | | |
|---|---|---|---|
| ಮೇಲುಕೋಟೆ ದೇವಸ್ಥಾನ ನಿಯಮನಪ್ಪಡಿ | 0 | 8 | 0 |
| ವಾಕ್ಯಗುರುಪರಂಪರಾ ವ್ಯಾಖ್ಯಾನ | 0 | 12 | 0 |
| ಯಾದವಗಿರಿ ಜೀರ್ಣೋದ್ಧಾರ | 1 | 8 | 0 |
| ಆಳವಂದಾರ್ ಸ್ತೋತ್ರವ್ಯಾಖ್ಯಾನ | 1 | 8 | 0 |

## ಮುದ್ರಣಕ್ಕೆ ಸಿದ್ಧವಾಗಿರುವ ಗ್ರಂಥಗಳು :

1. **ಊರ್ಧ್ವಪುಂಡ್ರ ನಿರ್ಣಯ :—**

ಇದರ ಅರ್ಥ ಆವಶ್ಯಕತೆ ಉಭಯ ಕಲೆಯುವರ ಚಿಹ್ನೆಗಳು ಅದರ ದ, ಆಕಾರ, ವರ್ಣ ಇತ್ಯಾದಿಗಳನ್ನು ಸಪ್ರಮಾಣವಾಗಿ ಸಚಿತ್ರದೊಂ ವಿಜ್ಞಾನರೀತಿಯಲ್ಲಿ ವಿವರಿಸಿರುವುದು.

2. **ಪಂಚಸಂಸ್ಕಾರವಿಧಿಃ ಮತ್ತು ಶ್ರೀಪಾದತೀರ್ಥ :**—ಇದು ು? ಇದರ ಅರ್ಥ, ಅಧಿಕಾರಿ ಅನಧಿಕಾರಿಗಳು, ಇದರ ಆವಶ್ಯಕತೆ, ಂತಾದ ವಿಷಯಗಳನ್ನು ಸಪ್ರಮಾಣವಾಗಿ ವಿಜ್ಞಾನರೀತಿಯಿಂದ ದಿರುವುದು.

3. **ಉಡುಪುಗಳ ವಿನ್ಯಾಸ :**—ಇದರಲ್ಲಿ ಪುರುಷರು, ಸ್ತ್ರೀಯರು ಹ್ಮಣ, ಕ್ಷತ್ರಿಯ, ವೈಶ್ಯ, ಶೂದ್ರರು ಮತ್ತು ಆಶ್ರಮಭೇದದಿಂದ ಸುವ ರೀತಿ ವಿನ್ಯಾಸಗಳು ಅಲ್ಲದೆ ಆಯಾ ಸಂದರ್ಭಕಾಲದಲ್ಲಿ. ಅಭಿ ಯವನ್ನು ಸೂಚಿಸಲು ಧರಿಸುವ ರೀತಿ ಅದಕ್ಕಾಗಿ ಏರ್ಪಟ್ಟಿರುವ ರ್ಣ, ಆಕಾರ, ಭೇದ, ವಿನ್ಯಾಸಗಳು ಇತ್ಯಾದಿಗಳನ್ನು ವಿವರವಾಗಿ ರುವುದು.

**ಹಬ್ಬ ಹರಿದಿನಗಳು** —ಇದರಲ್ಲಿ ಸಂವತ್ಸರಾದಿಯಿಂದ, ಕೊನೆಗೆ ನಡೆಸುವ ಹಬ್ಬ ಹರಿದಿನಗಳು ಯಾವುವು? ಎಷ್ಟು? ಏಕೆ ೀಕು? ಅದರ ಭಾವ ಕಾರಣಗಳನ್ನು ವಿವರಿಸಿರುವುದು.

**೭೪ ಜನ ಸಿಂಹಾಸನಾಧಿಪತಿಗಳು**.—ಶ್ರೀರಾಮಾನುಜಾಚಾ ಂದ ವೇದಾಂತ ಪ್ರಚಾರಕ್ಕಾಗಿ ಏರ್ಪಡಿಸಲ್ಪಟ್ಟ ೭೪ ಜನ ಸಿಂಹಾ ಪತಿ ಆಚಾರ್ಯ ಪುರುಷರುಗಳ ವಿಶದವಾದ ಪೂರ್ವಚರಿತ್ರೆ ಮತ್ತು ವೃಕ್ಷ ಇವುಗಳು ಬರೆಯಲ್ಪಟ್ಟಿವೆ.

**ಪಾಂಚರಾತ್ರಾಗಮ ವಿಮರ್ಶನೆ**:— ಈ ಗ್ರಂಥದಲ್ಲಿ ಹೇಳಿರು ವ? ಏತಕ್ಕಾಗಿ ಹುಟ್ಟಿತು? ಪ್ರವರ್ತಕರು, ಕಾಲ, ದೇಶಗಳನ್ನು ಣ ಮತ್ತು ಾಸನಗಳೊಡನೆಗೂ. ಜ್ಞಾನಯೋಗ, ಕ್ರಿಯಾ, ರ್ಯ ಪಾದಗಳ ವಿವರ, ಪಂಚರಾತ್ರ ಸಂಹಿತಗಳೆಷ್ಟು? ಅವುಗಳು ಅದರ ಪ್ರಾಶಸ್ತ್ಯ, ಮುದ್ರಾಮುದ್ರಿತ ಸಂಹಿತೆಗಳ ವಿವರ ಅವು ಅಡಕವಾಗಿರುವ ವಿಷಯ ಸೂಚಿಗಳು- ಇತ್ಯಾದಿ ವಿಷಯಗಳು ಲ್ಪಟ್ಟಿರುವುದು.

**ನೈಮಿತ್ತಿಕಾಹ್ನಿಕ ಕ್ರಮ**:— ಇದರಲ್ಲಿ ಯಜುಸ್ಸಂಧ್ಯಾವಂದನೆ ದಾನಕ್ರಮ, ಔಪಾಸನಕ್ರಮ, ಯಜ್ಞೋಪವೀತ ಧಾರಣಾ ಉಪಾಕರ್ಮ ಪ್ರಯೋಗ, ವರ್ಗದ್ವಯ ಪಿತೃ ತರ್ಪಣಕ್ರಮ, ಹವಾಚನ, ತಿರುವಾರಾಧನೆ: ಬ್ರಹ್ಮಯಜ್ಞ, ಸಂಕಲ್ಪ ಶ್ರಾದ್ಧ, ದಿ ವಿಷಯಗಳನ್ನು ವಿವರಿಸಿರುವುದು.

**[सर्वत्र प्रापणभृतिः पृथक्]**

*'s can be had from*.—

A. SREENIVASA IYENGAR,
Editor & Publisher,
46, Deveerammanni Agrahara,
MYSORE.